* ओ३म् *

# संक्षिप्तं महाभारतम्

प्रणेता—

श्री पं० विद्यानिधिः शास्त्री व्याकरणाचार्यः

प्राध्यापक : गुरुकुल विद्यापीठ हरयाणा

भैंसवाल कलां, रोहतक (हरयाणा)

प्रथमवार १०००

मूल्यम् २.००

* ओ३म् *

# संक्षिप्तं महाभारतम्

प्रणेता—

श्री पं० विद्यानिधिः शास्त्री व्याकरणाचार्यः
प्राध्यापकः, गुरुकुल विद्यापीठ हरयाणा
भैंसवाल कलां, (रोहतक)

प्रथमं संस्करणम् २०२६ वि० १९७० ई०

प्रकाशक:—
मन्त्री–महासभा
गुरुकुल विद्यापीठ हरयाणा
भैंसवाल कलां, जि० रोहतक



मुद्रक :—
देवव्रत शास्त्री विद्याभास्कर
आचार्य प्रिंटिंग प्रेस, दयानन्दमठ,
रोहतक (हरयाणा) । दूरभाष ५७४

# भूमिका

श्रीमहर्षिवेदव्यासप्रणीतं महाभारतं नाम बृहन् इतिहासः शास्त्रकारैः पञ्चमो वेदः स्वीकृतोस्ति । तस्मिन् ग्रन्थे वैदिक्याः संस्कृतेः सभ्यतायाश्च भूयान् समावेशो विद्यते । अनेके धार्मिका राजनैतिकाः सामाजिकाश्च विषयास्तत्रात्युत्तमया विधया निर्दिष्टाः सन्ति । तथा चाभाणकम्=यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचिद् इति । तादृशमभूतपूर्वमद्भुतं प्रसिद्धं ग्रन्थं संक्षिप्य 'संक्षिप्तं महाभारतम्' इति नाम्ना प्रणेता श्री पं० विद्यानिधिः शास्त्री व्याकरणाचार्यः कस्य नमस्यो न स्यात् । असौ पण्डितमहाभागः श्रीगुरुकुलविद्यापीठ हरयाणा भैंसवालस्य प्रथमः सत्तमः स्नातकः, वेद-व्याकरण-साहित्य-दर्शनादीनां प्राचामवाचां च विषयाणामद्वितीयो धुरंधरो विद्वान् समुल्लसति । समस्ता यजुःसंहितास्य कण्ठस्थास्ते । अस्य विदुषः शास्त्रपारावारपारीणस्य महानुभावस्य विशेषेण कविकर्मणि योग्यतानुपमा वरीवर्ति । सरस्वत्या देव्याः प्राप्तवरोऽयं विमलं यशः शेमुषीजुषां विदुषां समाजे सभाजयति । सर्वत्र प्रतिष्ठां वरिष्ठां संमानं चातिशयं लभमानोऽसौ प्रसिद्धिमाप्तोस्ति । एतन्मुखाद् निःसरन्ती सरसा सुरसरस्वती तथा प्रतीतिपथमतवरति यथायं वाग्देव्याः साक्षाद् वरदः पुत्रः प्रतीतो भवति । एतेन महानुभावेन प्राक् संक्षिप्तं रामायणम् प्राणायि । इदानीं चैनत् 'संक्षिप्तं महाभारतम्' नाम द्वितीयमप्यद्वितीयं पुस्तकं प्रणीतम् । अहं प्रभुं भगवन्तं प्रार्थये यदेष महानुभावः समुज्ज्वलं निजकीर्तिवितानं वितन्वन् पूर्णं पुरुषायुषं प्राप्तश्चिरं जीव्याद्, एवंभूतानुत्तमोत्तमान् संस्कृत—ग्रन्थांश्च प्रणीय जनतोपकारमातनुयादिति । अस्मिन् संक्षिप्ते महाभारते सरलयापि गम्भीरया सुरभारत्या वर्ण्यमानं वस्तु वर्णित-

मस्ति। पाठकानां रुचिरुत्तरोत्तरमध्ययने प्रवर्तते। यतो धर्मस्ततो जय इति मुख्यमादर्शं सत्पुरुषाचरितं सिद्धान्तं च दुर्योधनयुधिष्ठिर-मुखेनात्र साधु निर्दशितवान् ग्रन्थकारः। उक्तं च तेनैव स्वयम्—

नैष्ठुर्याज्जनुषान्धभूपतनयो दुर्योधनः क्रोधनः,
कुर्वन् यश्च युधिष्ठिरेण कलहं बन्धून् मुधाजीघतत्।
नष्टो भ्रष्टमतिः स्वयं च तदिदं व्यासप्रणीतं मया,
संक्षिप्तं विहितं हिताय सुधियां स्फीतं महाभारतम्॥ इति।

किं बहुना, अहमस्य विदुषः परिश्रमं सफलं कामयमानः सर्वत्रैतद्ग्रन्थप्रचारमभिलषंश्च पण्डितप्रवरमेनं भूरि भूरि हार्दिकं धन्यं वदामि।

विदुषामाश्रवः—
आचार्यो विष्णुमित्रः शास्त्री
उपप्रधानो महासभायाः

—:०:—

# महाभारत-विषय-सूची

# मुद्रणाशुद्धि--शुद्धिपत्रम्

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३८ | ७ | क्षण | क्षणं |
| ३९ | १ | पौरवा | पौरवा: |
| ३९ | ७ | एवं | एव |
| ४० | ५ | सुत | सुतं |
| ४२ | १३ | सग्राम | संग्राम |
| ४३ | १४ | भिधान | भिधानं |
| ४४ | १० | वश्यस्य | वंश्यस्य |
| ४५ | ७ | पोत्रिण | पोत्रिणं |
| ४६ | ११ | मेवेष्ट | मेवेष्टं |
| ४८ | ८ | गौरव | गौरवं |
| ४८ | १२ | मवश्य | मवश्यं |
| ४८ | १४ | नुरूप | नुरूपं |
| ४९ | ३ | सकाशौ | संकाशौ |
| ५२ | १२ | चिचाष | चिचीष |
| ५२ | १५ | यम | यमं |
| ५३ | ७ | सम | समं |
| ५३ | ११ | जायापता | जायापती |
| ५४ | ३ | मन्द | मन्दं |
| ५४ | ६ | शोक | शोकं |
| ५४ | ८ | प्रत्येक | प्रत्येकं |
| ५४ | १२ | विरुध | वीरुध |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५९ | ६ | यास | यासं |
| ५९ | १५ | मध्यक्षप्स्यत् | मध्यक्षेप्स्यत् |
| ६१ | ६ | निध्वामध्वा | निध्वानमध्वा |
| ६३ | १६ | वधमानो | वर्धमानो |
| ६५ | १४ | मुख | मुखं |
| ६५ | १६ | भीषण | भीषणं |
| ६८ | ४ | सोदरः | सोदरैः |
| ७१ | ४ | सघस्य | संघस्य |
| ७१ | २० | रथाश्वः | रथाश्वैः |
| ७४ | १७ | विवाहान्तरं | विवाहानन्तरं |
| ७५ | ३ | दानेननुग्र | दानेनानुग्र |
| ८४ | १ | श्रीकृष्णनुमत्या | श्रीकृष्णानुमत्या |
| ८४ | २ | खाण्डव | खाण्डवं |
| ९३ | ७ | पादचरेण वन | पादचारेण वनं |
| ९३ | ८ | ता | तां |
| ९६ | २ | धम | धर्मं |
| ९६ | ३ | त्व | त्वं |
| ९६ | १४ | त्व | त्वं |
| ९६ | १७ | ऽय | ऽयं |
| १०० | १५ | सन्दीमान | सन्दीयमान |
| १०५ | ९ | पर्यस्तयत | पर्यस्तयत् |
| १०७ | ३ | काश | काशं |
| ११४ | १५ | युधिष्ठिर | युधिष्ठिरं |
| १२५ | १७ | नपतिते | निपतिते |
| १२८ | १२ | वार्जिवन्तः | वार्जितवन्तः |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३३ | ७ | धरोत्तर | धरोत्तरं |
| १३६ | ६ | रथिन | रथिनं |
| १४२ | ३ | भीतिकृत | भीतिकृतं |
| १४२ | १७ | प्रच्छन्न | प्रच्छन्नं |
| १४३ | ८ | सघी | संघी |
| १४७ | १८ | त | तं |
| १४७ | २१ | पुष्पधयो | पुष्पंधयो |
| १४६ | २ | धात्र्यध | धात्र्यर्घं |
| १५१ | ८ | केवल | केवलं |
| १५१ | १३ | अस्माक | अस्माकं |
| १५२ | १६ | समुस्था | समुपस्था |
| १५३ | २ | समस्त | समस्तं |
| १५४ | १७ | सक्त | सक्तं |
| १५४ | १७ | दिव्य | दिव्यं |
| १५५ | ३ | न्वायत्त | न्वायत्तं |
| १५६ | ४ | स्व | स्वं |
| १५७ | १२ | यमुनैव | यमुनेव |
| १६१ | १० | रूढ | रूढं |
| १६२ | १० | सुप्रतीक | सुप्रतीकं |
| १६४ | १४ | रथ, त | रथं, तं |
| १६८ | ७ | कृतान्तापुर | कृतान्तपुर |
| १६८ | १४ | गर्जित | गर्जितं |
| १६६ | ८ | ऽह | ऽहं |
| १७१ | ५ | कृशा | कृशां |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७२ | ६ | चक्रकुल | चंक्रकुल |
| १७३ | ११ | त | तं |
| १७६ | ८ | बधं | वधं |
| १७६ | १३ | रवशिष्ट: | रवशिष्टै: |
| १७७ | ११ | पक्षयोद्वन्द्व | पक्षयोर्द्वन्द्व |
| १७८ | ४ | सारथेमघ | सारथेर्मघ |
| १८० | १ | पाण्डावानां | पाण्डवानां |
| १८० | ७ | समूहऽद्द | समूहोऽद्द |
| १८० | १२ | शोण्ड: | शौण्ड: |
| १८१ | १९ | गुण्डा | शुण्डा |
| १८५ | २ | निग्रहेदि | निगूहेदि |
| १८८ | ५ | भाष्ट्र | भ्राष्ट |
| १९० | २ | निवर्तमायास | निवर्तयामास |

# संक्षिप्तं महाभारतम्

(पथ्यानुष्टुब् वृत्तम्)

'महाभारतमैश्वर्यं ध्यात्वा संस्कृतगद्यभाक्[2]।
संक्षिपामि महाभारं महाभारतमाप्तवाक्[3] ।१।

(शार्दूलविक्रीडितं वृत्तम्)

आदौ पाण्डवधार्तराष्ट्रजननं शस्त्रास्त्रसच्छिक्षणं
द्वेषः पाण्डुसुतैः सुयोधनकृतो द्यूतात् स्वराज्यच्युतिः।
भीष्मद्रोणविभीषणे रणशिरस्याप्तो जयः पाण्डवै-
रन्ते कर्णसुयोधनादिहननं चैतन्महाभारतम् ।२।

यावद् द्वादश वत्सरान् सुविषमान् अज्ञातवासाधिकान्
गत्वारण्यमनिष्टकष्टसहनं द्वेषोपशान्त्यै कुले ।
आदर्शोऽत्र युधिष्ठिरप्रभृतिभिः प्रादर्शि यः पाण्डवैः
शिक्ष्यं तेन सदा ध्रुवं विजयते धर्मो महाभारते ।३।

---

१ महती चासौ भाः महाभाः माहेश्वरी शक्तिरित्यर्थः। तत्र रतं नित्यानुषक्तमैश्वर्यं भागवतं तेज इति यावत्। तद् ध्यात्वा।

२ संस्कृतं शोभनं गद्यं गदनीयं वचो भजते इति पक्षे महेश्वर-भगवदैश्वर्यस्य विशेषणम्। संस्कृतभाषाया गद्यं भजते इति पक्षे महाभारतग्रन्थस्य विशेषणम्।

३ आप्तस्य भगवतो व्यासस्य वाग् इत्यर्थे महाभारतस्य विशेषणम्। आप्ता प्राप्ता वाग् येनेत्यर्थे तु ग्रन्थकर्तुर्विशेषणम्।

केचित्तु ब्रुवते महात्मपदवीं प्राप्तः स धर्मात्मजो
नाज्ञासीन्निजराजनीतिनियमं तेन द्विषा धर्षितः ।
क्लिष्टः क्षत्रियधर्मवित् स तु पुनः शाठ्यं व्यतानीच्छठे
श्रीकृष्णेन महर्षिणायमुदितो मन्त्रो महाभारते ।४।
संघर्षान्न पलायनं समुचितं त्यक्त्वाधिकारं निजं
क्लीबत्वेन भयाद्रणादुपरता '[1] देहीति वाङ् मा स्म भूत् ।
मा जीवन् मनुजो वृथा परकृतावज्ञाप्रदग्धः क्षणं
कीर्तिं कन्दलयन् रिपुं च दलयन् ध्यायेन्महाभारतम् ।५।

(उपजातिवृत्तम्)

दुर्योधनं धिक् कुलघातिनं तं, द्विषन्तमन्यायपथप्रवृत्तम् ।
स्युः साधुवादाश्च युधिष्ठिरस्य, जहौ न यः कृच्छ्रगतोपि धर्मम् ।६
धर्मात्मजोऽसौ विनयोपपन्नः, पवित्रमादर्शमदीदृशन्नः ।
धर्मेण राज्यस्य रिरक्षिषा चेद्, एतन्महाभारतमीक्षणीयम् ।७

अथेदमधिक्रियते महाभारतं नाम बृहन्नितिहासो यस्याद्यः पुरुषः प्रबलप्रतापो राजा ययातिरासीत् । तस्य राज्ञो ययातेर्द्वौ सुतावास्ताम्—ज्यायान् यदुः, कनीयान् पूरुश्च । तत्र यदोर्जाता 'यादवा' इत्याख्यायन्त पूरोश्च

---

१ अयं देही देहवान् सन् देहि मह्यं किञ्चिद् राज्यांशं प्रयच्छ इत्येवं क्लीबत्वेन भयाद् युद्धविमुखां वाचं प्रयुङ्क्ते सैतादृशी वाङ् मा स्म कदाचन भूदित्यर्थः ।

'पौरवा.' । पुरुवंशे दुष्यन्तपुत्रः श्रीमान् भरतो नाम भूपो जज्ञे यद्धेतुकं भारतवर्षमिदं भारतमित्युच्यते। यदुवंशे वृष्ण्यन्धकभोजप्रभृतयो भूपतयः संजज्ञिरे यत्र श्रीकृष्णचन्द्र-महोदयः सौभाग्यातिशयात् सर्वानत्यशयिष्ट। भरतवंशे खल्वपि कुरुसंज्ञो नृपः समुत्पेदे यन्नाम्ना कौरववंशो जगति पप्रथे। ककुत्स्थेक्ष्वाकुप्रमुखा राजानोऽपि ययातिवंश्या एव यशःसंतानं सन्तेनिरे। सर्वेऽप्यमी सूर्यवंशजाश्चन्द्र-वंशजा वा अभूवन्। तेनैव हेतुना दशरथतनयः श्रीरामचन्द्रः काकुत्स्थ ऐक्ष्वाको वेत्यौच्यत। रामायणाद-तिदूरङ्गते बहुतिथे काले विशिष्टेऽस्मिन्नुद्दिष्टे कुरुवंशे श्रीलः प्रतीपो नाम भूपो जन्म लेभे यत्तनयः शन्तनुः श्रीमान् राज्यसिंहासनमधितष्ठौ। शन्तनुः किल प्रजाप्रियो धर्मात्मा भूपतिः सन्नपि मृगयायामभिरुचिं चकार। वन्यपशूनामाखेटस्तस्मै भृशमरोचत। एकदासौ मृगया-व्यापारमनुष्ठाय निवर्तमानो गङ्गासरित्तीरे स्थितामेकाम-तिसुन्दरीं वनितामपश्यत्। तस्या लावण्यातिशयं निभा-ल्यासौ तस्यां प्रासजत्। सापि कामिनी तं स्वस्मिन् दृढबद्धानुरागं विज्ञाय सपणबन्धमुवाच, 'यदि भवान् मां कामयते तर्ह्यहमपि भवन्तं कामयमानास्मि। किन्तु भवतेदं प्रतिज्ञायतां यन्मम कर्मणि समुचितेऽनुचिते वा नाहं श्रीमता कदाचिदंशतोऽपि प्रतिषेद्धव्या। न

चाहमवधीरणीयेत्यवधारणीयम् । इत्थंभूतं नियममिमं यदि श्रीमान् समुल्लङ्घिष्यते तदा झटित्येव भवन्तं परित्यज्याहमन्यत्र गमिष्यामि' इति । राज्ञा कामोपहतेन तत् तथैवाङ्गीकृतम् । सा च परिणीयान्तःपुरं नीता कृताभिषेका च कृता । अतिक्रान्तेऽन्हेहसि सैकं सुत सुषुवे । तं च जातमात्रमेव जातकं गङ्गायां निचिक्षेप । नृपः शन्तनुर्भृशं कुपितोऽपि, उद्विग्नोऽपि, चिन्तामग्नोऽपि, भग्नाशः सन् पूर्वकृतप्रतिज्ञावशान्न किंचित् कर्तुं शशाक। एवं तया वनितया महिषीभूतया सप्त जनिताः स्वकीया आत्मजा गङ्गायां निपात्यक्षयं निन्यिरे । राज्ञा च तदीयं तत् कृत्यारूपं कृत्यं परवशेन सेहे । अष्टमे सुते जनिते सति यदा तमपि सा गङ्गायां प्रक्षेप्तुमियेष तदानीमत्यन्ताय क्रुद्धेन विरुद्धेन भूपेन सा प्रतिरुद्धा सतीदमवोचत्, 'अयि पुत्रीयन् भूप ! तव शन्तनोरस्तु शं तनोः । भवतो बलवदभिनिवेशान्नाहमिमं तनयं ध्वंसयिष्यामि । प्रत्युत पालयिष्यामि स्वयमेव । किन्तु नातः परतरं तव गेहे स्थातास्मि, प्रागभिहितप्रतिज्ञाभङ्गात् । एनं सूनुं सहैव नेष्यामि । तत्रैव चास्य पालनेन भाविता । श्रूयतामेष भूतार्थः । अहमस्मि महर्षिजह्नुतनया गङ्गेति नाम। महर्षिणा वसिष्ठेन पुरा कदाचिदपराद्धा वसवोऽष्टौ कष्टमभिशप्ताः, 'यूयं मर्त्यलोके जन्म लभध्वम्' इति । तेषां

वसूनां जननार्थमहमिह भुवि समवततर। मयैते सप्त जनिताः। जननसमकालमेव च तेषामिच्छानुरोधात् ते मर्त्यलोकादितः क्षयं नीत्वा स्वर्लोकं प्रापिताः। एषोऽष्टमोऽपि तत्रैव मया नायिष्यते। नात्र विकल्पः कार्यः। इमं च दिव्यांशसंभूतं पूतं सुतं सम्यक् परिपोष्य कवचहरं रिपुसंहननं च सम्पाद्य तुभ्यमेव पुनरर्पयिष्यामि। मा स्म चिन्तामतनुं तनुथाः' इत्येवमाभाष्य सान्तर्हिता। सत्यवसरे सम्प्राप्तः स आप्तो गाङ्गेयोऽविगेयो 'देवव्रत' इति नामधेयं पित्रा शन्तनुना लम्भितः। अमुष्यैव 'भीष्म' इत्यपरं नाम परस्ताद् व्यक्तीभविष्यति।

लोकगुरूणां कुरूणां वंशजस्य तस्य शन्तनो राजर्षेरस्ति हस्तिनापुराख्या सदभिख्या मुख्या हसितसुरपुरश्रीररिचयपरिचयरहिता सकलकलाकलापकलिता ललिता प्रियकामहिता महिता विशिष्टयशोधिष्ठानी राजधानी। यस्यामुच्चप्रासादवर्तिदीपवर्तिनिर्गतधूमलताधूमिलता वियति विसर्पतश्चन्द्रस्याङ्कतां गताङ्कतां भजते, यदीयानि गोपुरद्वाराणि विशालानि चन्द्रकान्तमणिनिर्मितत्वादतिशीतलानि सन्ति, यत्र च वसन्तीनां वनितानां मुखचन्द्रसंपर्काच्च्यवमानानि शशिकान्तमणिभवनानि पयःपूरं प्रवाहयन्ति, तेनैव पयोराशिना मन्ये वियद्गङ्गोत्पद्यमाना दिविषदां प्रमोदाय कल्पते, यत्र च गृहखचितमणिप्रभा-

भिर्निशापि दिनेव प्रतीयते, यस्यां चाङ्के वीणामवस्थाप्य वसन्तरागे गीयमाने तत्कालं वीणादण्डः कुसुमपल्लवानुद्भावयति,—तत्सौरभ्यलुब्धा मधुलिहश्चागत्यागत्य तत्र झङ्कुर्वते। तस्यामेतादृश्यामनितरसदृश्यां दृश्यान्तराश्चर्यकर्यां पुर्यां धुर्यः शूराणां कुरूणामधिपः पाण्डुर्नाम राजोदारविक्रमः सम्यक् प्रजाः पालयन् तन्मनः पल्लवयन् यमुनासखीसखैर्यशःप्रकाशैर्लोकं निजनामवाच्यतां नयन्नुदलासीत्।

पाण्डोरयं वंशक्रमः। पुरा किल पराशरो नामर्षिर्धीवरसुतायां कुमार्यां सत्यामेव सत्यवत्यां व्यासं नामात्मजमजनयत्। परतश्च सा सत्यवती राज्ञा शन्तनुनोढा सती विचित्रवीर्यं चित्राङ्गदं चेति नामधेयं सुतद्वयमसूत। तयोश्चित्राङ्गदो द्विषद्भिः सह सग्रामयमाणः स्वर्ययौ। विचित्रवीर्यश्च स्त्रैणः सातिशयविषयभोगाद् व्यापदमापत्। देव्या गङ्गायाः पुत्रो देवव्रतो युवति सत्यवतीं कामयमानस्य स्वपितुः शन्तनोः शं तनोमीति विविच्य स्वयमाजन्मब्रह्मचर्यव्रतपालनरूपेण पणबन्धेन सत्यवत्याः पितरं सन्तोष्य तदनुमतः स्वपित्रेहितां तां नितान्तंकान्तशान्तस्वान्तो निशान्तान्तःपुराग्रमहिषीं व्यधत्त। आजन्म ब्रह्मचर्यं चरिष्यामि पित्र्यं प्राज्यं राज्यं च न भोक्ष्यामीति भीष्मायाः प्रतिज्ञायाः करणाद्

हेतोरसौ भीष्म इत्याख्ययाऽऽख्यायत। गाङ्गेयः शान्तनवो देवव्रतो भीष्म इत्यनर्थान्तरम्। एवं च भीष्मव्यासचित्राङ्गदविचित्रवीर्याश्चत्वारोऽमी भ्रातरो धर्मार्थकाममोक्षाणां समवाय इव भवन्ति। मातृस्थानीयसत्यवत्यादेशाद् भीष्मेण ब्रह्मचारिणा निजभ्रात्रोश्चित्राङ्गदविचित्रवीर्ययोः कृते ससंरम्भमारम्भं प्रकाश्य काश्याः सकाशात् स्वयंवृतास्तिस्रः कन्यका अम्बाम्बिकाम्बालिकाभिधाः समानायिषत। तास्वम्बा शाल्वं नाम भूपं पुरा वृतवतीति कृत्वा तत्रैव परावर्तिता। शिष्टयोरनुच्छिष्टयोश्चित्राङ्गदविचित्रवीर्याभ्यां सह यथायोगमुपयमस्तेने। कालक्रमेण मृतभर्तृकयोरनपत्ययोरेव सत्योस्तयोरम्बिकायां व्यासनियुक्तायां ज्यायान् धृतराष्ट्रः समुत्पेदे। स च जनुषान्धोऽभूत्। अम्बालिकायां च यवीयान् पाण्डुः। सोऽपि पलाण्डुवत् पाण्डुवर्णत्वात् तथाभिधान दधे। अम्बिकाम्बालिकयोर्दास्यां च कस्याश्चित् सर्वसंशयच्छिदुरो धर्मविदुरो विदुरो जनिं लेभे। धृतराष्ट्रपाण्डुविदुराणां त्रयाणामपि भ्रातृणां जातकर्मादिः संस्कारो दारपरिग्रहणं चाशेषेण विशेषेण रिपुधृष्णुना भीष्मेणैव सप्रतिष्ठमनुज्येष्ठमनुष्ठितः। पाण्डोश्चित्रं पवित्रं चरित्रं जगतीतले सर्वस्य नमस्यं श्लाघनीयं च बभूव। स स्वयं पाण्डुः सन्नपि स्वीयैः शौर्योदार्यप्रजानुरञ्जनादिभिः

प्रगुणैः सद्गुणैः समस्ताँल्लोकान् प्रशस्तान् शक्तान् रक्तांश्चातनोत् । तेन राज्ञा बहूनि षोडशप्रकाराणि दानानि दत्तानि । तैश्च प्रत्येकं कीर्तिखण्डानि जनितानि । समस्तैश्चैभिः षोडशभिः खण्डैरिन्दुरजनि तस्य षोडशकलावत्त्वाद् इति सत्यं प्रतीमः । समुद्राच्चन्द्रो जात इति तु वितथैव कथा कथिता प्रथते । तत्रैकं खण्डं मृगचर्मदानजन्यं वधसाध्यतया पापसंकुलमिति तदेव कलङ्कत्वेनेन्दावुदिङ्-गयते ।

नवे वयसि वर्तमानोऽरिश्रियां निग्रहीता बहुश्रेयसी स राजा यदुवंश्यस्य कुन्तिभोजस्य राज्ञः सुतां कुन्तीं नाम कन्यां मद्रदेशजां माद्रीं नाम च कन्यामन्यां धन्यां रम्यामुपयम्य रत्नाकरमेखलयेलया सहैव लीलयान्तःपुरमीलयांचकार। प्रभूतार्जितार्थराशिश्च दिग्विजयं तेने । अथ कदाचिन्मृगयोपलालितहृदयः सदयोऽपि नरेश्वरोऽयं शशिश्वेतरोचिष्यश्वे कृताधिरोहः पार्श्वधृतबहुश्वभिरनेकवागुराद्युपकरणैर्योधैरनुद्रुतो मृदुभद्रविनयाभ्यां यदुमद्रतनयाभ्यां प्रियाभ्यामनुविद्धः सिद्धगणगणनीयमहिमवतो हिमवतो महतीमटवीतटवीथिकामवजगाहे । तत्र परपरासनपरं शरासनवरं करे कुर्वाणो गीर्वाणचक्रवर्तिविक्रमः क्रमेण मृगवधं विविधं विधातुमुपचक्रमे ।

प्रियाभिः सह विहरन्तं कृष्णसारमुद्दिश्य बाणमाक्रष्टु-कामे राजनि पाण्डौ तदभिप्रायं ज्ञात्वा संभ्रान्ताभि-र्हरिणीभिः स्वप्रियतमप्राणापहरणसंभावनया कातरनयन-संचारणद्वारेण नीलकान्तिप्रसारणविधया विपिने यमुनेव प्रावाह्यत। भूदारोऽयं राजा स्वकीयाश्वह्रेषारव-श्रवणाद् धृतमत्सरं त्यक्तपल्वलविहृतिं सम्मुखमभिधावन्तं भूदारपदवाच्यं पोत्रिणं[1] स्वयं भूदारत्वेन तत्समकक्षत्व-मक्षममाणस्तं न्यवधीत्। वनमहिषसजातीयत्वेन पुराण-त्वेन च यममहिषोऽमीषां कुलस्यादिमः पुरुषोऽमीभिः सह वासस्याधिकारी भवतीत्यौचित्यादमी वनमहिषा मृत्वा यमपुरीं गतास्तेन सह वासं लभन्तामिति धियैवासौ वनमहिषान् निजघान।

द्रुतगामिनं हयमारूढोऽयं गिरीशदरीशयान् मदशालिनो हर्यक्षान् ऋक्षान् वृक्षान्तर्हिताँस्तरक्षूंश्च निर्विघ्नं निघ्नंस्तूर्णं पूर्णं मृगयारसं सतृष्णमपुष्णात्। तदनन्तरमसौ परन्तपः समन्ततः शकुन्तरवनिरन्तरदिगन्तराद् अखिलमृगकुलशर-ण्याद् अरण्याद् उत्प्लवमानस्य कस्यचिच्चमूरोः सरणिमनुसर-न्नशिथिलरतिसुखसनाथं हरिणमिथुनं नयनपथस्यातिथी-चकार। तस्मिन् युग्मे स तिग्मेन बाणेन पुमांसं मृगं जघान।

---

[1] सूकरम्

असौ च वातायुः[२] सहसा जातायुर्महर्षेराकारं धारयन्नदृश्यत। ततः कृपामन्दमनाः किन्दमनामधेयः स महर्षिर्महारुषा[३] स्यन्दमानरुधिरेण कल्परविकल्पमहा रुषा तस्मिन् महीभृति ससंभ्रमाम्भोजदृक्[४] संभोगस्तम्भकं दम्भोलिमिव सहस्राक्षः शापमुदस्राक्षीत्—यथा स्वस्त्रिया सह रममाणोऽहं त्वया मारितस्तथा त्वमपि स्त्रियं रतये गत्वा मरिष्यसीति। तदनु विरचितमनस्तापेन मुनितापसशापेनाक्रान्तः संभ्रान्तः स पाण्डुरखण्डं चतुरङ्गबलमिव सप्ताङ्गराज्यमपि व्यसृजत्, ज्यायसि भ्रातरि धृतराष्ट्रे च न्यस्तहस्तिनापुरराज्यभारस्तपस्यन्नरण्यं शरण्यं चकार। तदानीमष्टाङ्गयोगानवतोऽस्यावनोपतेर्मृदुकन्दमूलमेवेष्टं मिष्टान्नमासीत्। वनस्य गर्भः केलिसौधो दर्भश्च सिंहासनतामाशिश्रिये। अथ स आत्मनोऽनपत्यभावमपाकरिष्यन् भुवनं चापत्यभावं[५] करिष्यन् प्रियतमां देवीं कुन्तीमुपह्वरे समाह्वयत्। समुचितं च वचः प्रावोचत्—अयि प्रिये! यदुवीरकन्ये! मन्येऽधन्यस्य मे महीमिमां परिपालयतोऽपि सन्तत्यभावान् मानवजन्मसाफल्ये वैकल्यमजनि। 'प्रजया हि मनुष्यः पूर्णः' इति श्रुतेरपुत्रस्य मे गतिर्नास्ति। तत्रभवतः

---

२ मृगः। ३ बृहता अरुषा मर्मणा। ४ अम्भोजदृशः स्त्रियः। ५ न विद्यते पत्युरभावो यस्य तद् अपत्यभावम्। पत्यभावरहितमित्यर्थः।

कुमुदैकबन्धोश्चन्द्रस्यास्मत्कुलप्रवर्तकस्यामृतमयतया सकल-देवगणोपभोग्यं केवलं गात्रमेवापाण्डु[1] न वर्तते। किं तर्हि? गोत्रमप्या[2]पाण्डवेवेत्यहमद्य स्फुटं प्रत्येमि। अपत्यशून्यतयाहमिमानि भोगवैभवयशःक्षितिजीवितानि वृथा मन्ये। सन्ततिलाभस्य हि स्त्रीप्रसङ्गमात्रसाधनतया किंदमशापेन तस्य कर्तुमशक्यतया च संततं संतप्ये। अतो मदीयानुमत्याऽगत्या त्वं व्रतोपवासादिना नियमेन नियोगेन वा पुत्रं प्रसूष्व येन क्षेत्रजापत्यमप्यवाप्याहं निर्वृतिमासादयेयम् इति। इत्थमसंकोचतः शोचतः पत्युः पाण्डोरभिमुखीभूय भूयो मन्दाक्षरमणीयं[3] [4]मन्दाक्षरमणी-यन्त्रितमिदं वचो रमणीप्रथिता पृथाप्यवृथा कथयामास। हे राजन्! अद्यावध्यनाविष्कृतं श्रूयतामितिवृत्तं किंचिदावेदयामि। पुरा मम पिता [5]निशान्तमधिवसतः कृशां तनुलतां तपसा वहतोऽप्यशान्तमनसो मुनेर्दुर्वाससः सेवायां मां कुमारीमेव सतीं न्ययुङ्क्त। तस्य तपःकृशस्य तपस्विनः सारूप्यमिवाप्तुं मदीयैः कमनीयैरपि दमनीयै-

---

१ आ समन्तात् पाण्डु श्वेतवर्णम्। २ पाण्डुपर्यन्तम्। अभि-विधावाङ्। पाण्डोश्चन्द्रवंशित्वाद् अग्रे सन्तत्यभावात् पाण्डुवंश—संतानाप्रवृत्तेरित्यर्थः। ३ मन्दाक्षेण लज्जया रमणीयं सुन्दरम्। ४ मन्दाक्षराणि शिथिलवर्णा एव मण्यः ताभिर्नियन्त्रितम्। ५ निशान्तं गृहम्।

रङ्गैस्तत्सेवाप्रसितैर्दिने दिनेऽतिकार्श्यमापेदे । स च मत्सेवया प्रमुदितमना मुनिर्मय्येव शिष्यतामभितां वितन्वन्नन्ते[६]वसन्तमपि कोपमपाचकार । मम गृहे वर्षं यावदास्थितो मुनिवरोऽसौ कदाचिदेकाकिनीं स्वपार्श्वस्थां मामवलोक्यैवमवादीत्—'वत्से ! त्वत्कृतयाऽऽश्चर्यया तपश्चर्ययाहं भृशं प्रसीदामि' इति व्याहृत्य मय्यनुकम्पासम्पादनार्थमत्यर्थमीप्सितार्थसमर्थनतन्त्रं कमपि मन्त्रमुपादिक्षत् । तदुपदिष्टवरमन्त्रलाभादात्मनो गौरव मन्यमानायां मय्य[७]पुष्पवत्यामपि दशायां कश्चनामोद[८]भरोऽधिकमेवाविरासीत् । तस्य दुर्वासोदत्तस्य मन्त्रस्य प्रभावेण मया ध्यायमानाः केऽपि शक्रप्रभृतयो देवाः स्वसदृशशौर्यादिगुणशालिनः पुत्रान् मयि जनयितुमवश्य दयिष्यन्ते । इति वचनमयीं सुधां किरन्तीं कुन्तीं प्रशंसन् पतिः पाण्डुः कुरुवंशविवृद्धयेऽनुरूपं सुतोत्पत्तिस्वरूपं महोत्सवं द्रष्टुमन्वमंस्त । ततः कुन्ती पत्याऽप्रत्यादिष्टा मुनेर्विद्ययाऽनवद्यया धर्माद् देवाद् इन्द्रियजये स्थिरं युधिष्ठिरं नाम सुतं प्राप। पवनाद् द्विषद्भीमं भीमं नाम। जिष्णोरिन्द्राद् अतिधृष्णुं जिष्णुमर्जुनं नाम । इत्थं युधिष्ठिरभीमार्जुनाख्यास्त्रयः पुत्रास्तया लेभिरे ।

६ अन्ते वसन् शिष्य इति ध्वन्यते । ७ पुष्पं रजः, कुसुमं च । ८ आमोदो गन्धः, हर्षश्च ।

तत्सपत्न्या चोन्मुद्रितभद्रमुद्रया माद्रयाप्यक्षुद्रौ निरुपद्रवौ कृतसंयमौ यमौ नकुलसहदेवनामानौ सुतौ युगपदेव तद्दत्त-मन्त्रप्रभावान्नासत्ययोः[1] सकाशात् तत्प्रकाशसकाशौ प्रभाते लेभाते। युधिष्ठिरादीनां पञ्चानामपि पाण्डवानां जन्मसमये [2]वासवनन्दनसंभूताः [3]सुमनसो यथोचितं दिवि नर्तनं भुवि निपतनं च समाचरन्। वने धात्रीस्थाने ऋषि-स्त्रियः, गानस्थाने वेणुस्वनः, दोलाशयनस्थाने च वल्कलश-यनं तानुपाचरत्। बुभुक्षापीडया यदा त्रयोपि कुन्तीपुत्राः स्तन्यपानविषयेऽहमहमिकयाऽकलहायन्त तदा तेषां कलहं शमयन्ती कुन्ती द्वयोः स्तनयोरेकं युधिष्ठिरार्जुनयो-र्भागमकल्पयत्। अपरं चैकं स्तनं भीमस्य भागं व्यधात्। तस्य बह्वाशित्वात् समांशप्रविभागेनोदरपूर्त्तेरसंभवात्। उत्तानशयो बालो भीमो यदुदग्रां मुष्टिं बबन्ध तत्तस्य भाविनो राक्षसैः सह युद्धस्योत्कण्ठामिव प्राचीकटत्। हस्ताभ्यां जानुभ्यां च संचरमाणाः पञ्चापीमे पुत्रा मातृस्थानीयायाः पृथिव्याः पादेन स्पर्शं परिजिहीर्षन्त इव लोकानानन्दयामासुः। बाल्यात्ते मधुराभिरस्फुटा-भिश्च वाग्भिरन्योन्यमाह्वयन्त; पूर्णं नामोच्चारयितु-

---

१ अश्विनीकुमारयोः। २ वासवः इन्द्रः। ३ सुमनसो देवाः पुष्पाणि च।

मपारयन्तोऽर्धं नामोच्चार्यैव विरमन्ति स्म। तावतैव च वक्तव्यसमाप्तिं प्रतियन्ति स्म। तत्र युधिष्ठिरार्जुन-नकुलसहदेवाः खल्वपूर्णनामान एवावतिष्ठन्ते स्म। भीमसेनस्य नामनि तु भीम इत्यर्धोच्चारितेपि स पूर्णनामैव सम्पद्यते स्म। तावतापि तस्यार्थस्य सम्प्रतिपत्तेः। युधिष्ठिरादीनां त्वर्धोच्चारणादर्थपरि-समाप्त्यभाव एवाविर्भवति स्म।

सामान्यतो यमं दृष्ट्वा लोको बिभेति परं माद्रीतनयौ '[1]यमत्वं प्राप्यापि समेषामन्तरङ्गं तरङ्गयामासतुः, इत्या-श्चर्यमेव मेने जनैः। एवं क्रमेण विधिवदुपनीतानां मधुरेण वयसा शिरसा च परिष्कृतवपुषां विनयगौरव-पुषां सकलासु कलासु कौशलमुन्मीलयतां पाण्डुतन-यानां यशांसि [2]बलभेदनदन्तावलस्यैरावतनाम्नो धाम्नो युगलं स्वर्गं सागरं चोभयमपि युगपदुल्लङ्घ-यामासुः। अतिसुन्दरयौवनशोभासम्पन्नान् एतान् पाण्डुपुत्रानवलोक्य मुनयः स्वचेतसीत्थं संभावयन्ति स्म, किं लोकत्रयं वशीकर्तुं कामोपि स्वविशिखवत् पञ्चधा जात इति। पाण्डुभ्राता ज्येष्ठो धृतराष्ट्रोपि दुःशकुनशकुनिभगिनीं गान्धारदेशजां गान्धारीं नाम

---

१ युगलत्वम्। यमराजत्वं चेति ध्वन्यते। २ बलभेदनः इन्द्रः।

कन्यामुपायंस्त । तस्यां च दुर्योधनदुःशासनादीन् शतं पुत्रानजीजनत् । एकां दुःशलां नाम पेशलां कन्यकां च कांचन । विदुरोपि [3]पाराशवीं कन्यां भीष्मोपायत [4]उपायत । तस्यां चात्मानुरूपं सुतमुत्पादयामास ।

अथ कदाचिदखिल[5]हरिदन्तरनिरन्तरवलमानमलय-[6]पवमान—कम्पितचम्पकसम्पादितसौरभसम्पदनुकम्पित-[7]निलिम्पपथाः [8]केसरकुसुमकेसरशिखरभासुरधूलिधूसरदिशः समुन्मिषद्वासन्ति[9]कामिषेण सीमन्तिनीरतेरुदन्तं [10]दुरन्तं विचिन्त्य रहसि वसन्तं नृपं तमिव हसन्तो वसन्तोदयवासरा मन्दमन्दमरण्याङ्गघरण्यां कमपि विकासमासादयामासुः । तदानीं किंशुकस्य[11]कुसुमेषु झंकुर्वतो मधुपालिः किं शुकस्य[12] वदने रुचिरत्वं, किं शुकस्य[13] हृदयेपि वशित्वम् इतीव शंसति स्म । [14]कुरवके रवकेलिभृतः षट्पदाः सुधासमधुरं मधुरं मधु पपुः । नृपवने पवनेरितपादपेऽनिवार्यं [15]स्मयं चापुः ।

---

३ वर्णसांकर्येणोत्पन्नाम् । ४ उपयमनं चक्रे । ५ हरितो दिशः तेषामन्तरे मध्ये । ६ पवमानो वायुः । ७ निलिम्पा देवाः तेषां पन्थाः । ८ केसरो वकुलः मोलसरीत्याख्यः । ९ वासन्तिका जूहीत्याख्या लता । १० उदन्तं वृत्तान्तम् । ११ किंशुकः पलाशः । १२ शुकः कीरः । १३ शुकदेवः । १४ कुरवकः कुरण्टकाख्यो वृक्षविशेषः । १५ स्मयो गर्वो हर्षश्च ।

तस्मिन्नवसरे तपोवनपरिसरे शीतलमन्दसुगन्धिना मलयानिलेन संनिधिं नीयमानो मद्रजः[1]परिग्रहस्तपस्यन्तमपि कं मनस्यन्तः परितापसम्पदा न लिम्पेदित्यर्थान्तरमप्यलिगिरा बोधयन्त्यां वासन्त्यां क्षितिपतिः पाण्डुः क्षणादेव प्रसून[2]धन्वनो लक्ष्यतामध्यरुक्षत् । स च माद्रीमादाय रतये लतागृहं प्राविक्षत् । माद्री तु किदममुनिभाषितं पत्युर्मृत्युप्रदं शापं स्मरन्ती स्मरजं पत्युस्तापं च निरीक्षमाणा चित्तोन्मादकारणसमवधाने सत्यपि दोलायमानहृदया तदासीत् । किंतु दुर्निवारविधिनियोगाच्चाटुप्रयोगे चतुरः पाण्डुः प्रसूनतल्पे माद्रीं न्यवीविशत् । तत्र चानल्पसंकल्पकलितौ ललितौ तौ दम्पती मुनिशापबलपरिचिचोषयेवातिचिरप्रमुषितमसमशर[3]समरमुन्मीलयामासतुः । किन्तु हन्त समाप्तायामेव रतिक्रीडायां पाण्डुर्गतासुरभवत् त्यक्तविषयवासनापाशमेकमिन्द्रियनिग्रहरूपं यमं विहाय वधूमुपेयुषः पाण्डोरनवरतमूरीकृतपाशोऽपरो यमस्तत्र लतागृहे व्यराजत । यद्यपि सर्वे[4] एव

१ मद्रजः परिग्रहः = मद्रदेशजा स्त्री माद्री इत्यर्थः । अथ च मद्रजः परिग्रहः = मम रजसः स्वीकरणम्, मम परागनिषेवणम् इत्येतदुभयं कं तपस्यन्तमपि मुनिं मनसि अन्तः अन्तर्मानसे परितापसम्पदा विरहानलेन न लिम्पेत् इत्यर्थान्तरं वासन्ती लता तदानीमसुसूचदिवेत्याशयः । २ प्रसूनधन्वा कामः । ३ असमशरः कामः । ४ सर्वः, सर्वे इत्येकवचनबहुवचनयोः सन्धिच्छेदः ।

कुरवो[५] हरिणेक्षणानामालिङ्गनेनामोदपौरवभृतो[६] भवति भवन्ति च तथापि तन्मध्यभागपि स पाण्डुर्मद्रतनयामालिङ्ग्य जीवितावधिं प्रपेदे इति महदाश्चर्यमेतत् । सुरतानन्तरं सुतरां माद्री मृतेर्मुद्रया निद्रया निमीलितं निजं वल्लभमुदीक्ष्य करद्वयं चोदस्य विह्वला सोरस्ताडमुच्चैः प्रारोदीत् । तत्कृतं क्रन्दनं निशम्य कुन्त्यप्यत्याहितं मत्वा युधिष्ठिरादिभिः पञ्चभिः पुत्रैः समं तत्र लताकुञ्जे समेत्य पतिं च मृतं निभाल्य मुक्तकण्ठा चिरमाचक्रन्द । तत्र भूयो रुदित्वा मृतं पतिं पाण्डुमनुमृता माद्री सती भूता । उभयोः स्त्रीपुंसयोरौर्ध्वदेहिक्यः क्रियास्तत्रस्थैर्गृहस्थैर्वनस्थैर्व्यधायिषत । एवं च तौ जायापती देवभूयं[७] गतावपि पुनः सुमनसां पुरस्तात् सुरतोत्सव[८]मन्वभूताम् । तदनु नव्यवैधव्यबहुव्यथायाः पृथायाः कुन्त्याः पुरः पितृशोककदर्थितसोदरजनसहिताय विदितनिखिलधर्मजाताय धर्मजाताय युधिष्ठिराय महत्यामपि विपत्त्यां सत्यामत्याज्यं धैर्यमिति राजनीतिसदुपदेशं विशिष्य प्रकाश्य काश्यपादयो दयोपेताः शतशृङ्गमुनिपुङ्गवास्तुङ्गमणिसौधशृङ्गे कुलक्रमागतं

---

५ कुरुशब्दस्य प्रथमाबहुवचनम् । पक्षे कुरवः कुरवकः कुरण्टकाख्यो वृक्षविशेषः । यः स्त्रीणामालिङ्गनात् सुरभितो भवतीति कविसमयः । ६ भृत-शब्दस्य प्रथमैकवचनम् । भृत् इति क्विबन्तस्य तु प्रथमाबहुवचनम् । ७ देवभूयं देवत्वम् । स्वर्लोकमिति यावत् । ८ सुरस्य भावः सुरता । देवत्वमित्यर्थः । पक्षे सुरतं संभोग इति कथ्यते ।

कुरुनगरं हस्तिनापुरमेतानवतारयामासुः। युधिष्ठिरादीनां हस्तिनापुरप्रवेशवृत्तान्तमाकर्ण्य सभामण्डपाच्चलितो धृतराष्ट्रो मन्दं मन्दं तदन्तिकमागत्य प्रेम्णा करौ प्रसार्य तानालिङ्ग्य च तत्स्पर्शवशादेकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति नयेन प्रियभ्रातुः पाण्डोः स्मरणं कुर्वन् प्रवहताश्रुणा शोकजलाप्लुतं चकार। आत्मजानां दुर्योधनादीनां शते च यावत् प्रेमासीत् तावत् प्रेम युधिष्ठिरादिषु पञ्चसु प्रत्येकं बबन्ध। एवं वत्सभावेऽपि भक्तिमत्सु तेषु निजपितृवत्सलतामसकृत् समीक्ष्य मत्सरेण दुर्मनायमानो दुर्योधनो हृदयालवाले[1]राधेय[2]प्रधानदुर्बोधमेधोत्सेधसविधधरणीरुहमधिरूढामकुतोरोधां विरोध[3]—विषविरुधमेधयांचक्रे। कटुविपाकमविनयं धारयतां निर्मूलगर्वशालिनां तेषां दुर्योधनादीनां पाण्डवशत्रुभूतानां ललाटे यौवराज्यमिच्छति सति भीमस्तदुपरि प्रहारं कर्तुमैच्छत्।

प्रबलबलशाली भीमो नास्माकं वश्योऽवश्यंभावेन भवतीति चिन्तया दुर्योधनादयो यौवराज्यान्निराशा अजायन्त। यद्यपि धार्तराष्ट्राणां कोपस्य भाजनं

---

१ हृदयमेव आलवालः आवापः। २ राधेयः कर्णः। कर्णप्रधानानां दुर्बोधानां मेधाया उत्सेधः औन्नत्यमेव सविधधरणीरुहः पार्श्वस्थो वृक्षः तमधिरूढाम्। ३ विरोधरूपां विषवल्लीम्।

पञ्चापि युधिष्ठिरादयो भ्रातर आसन् । तेषां कोप-नदीप्रवाहः सामान्येन पञ्चस्वपि प्रवहति स्म, तथापि युधिष्ठिरादीनां विशेषेण भीमबलाश्रयतया धार्तराष्ट्रा भीमायैव समधिकमकुप्यन् ।

एकदा सर्वे धृतराष्ट्रपुत्राः पाण्डुपुत्राश्च गङ्गायाः सलिले विहृत्य समुत्तीर्णास्तद्वीचीभिरनीचीभिस्तटदेशं प्रापितेषु फेनपटलेष्विव पटगृहमण्डपेषु परिगृहीतमनोहराम्बर-पटीर[1]हाराभ्यवहाराः कुशलकुशी[2]लवकुलशीलित—विचित्रवादित्रकलशोरवविवशीकृतमनसः सुखमासा-मासुः । तेषु भीमो जाह्नवीतटभूम्याः क्वचनैकान्तभागे नलिनदलतल्पमास्तीर्य सुखमस्वाप्सीत् । निशीथे तथा-भूतस्य तस्य जिघांसया दुर्योधनादिष्टा विषवैद्या बहून् सर्पान् युगपदेव तद्वपुषि व्यापीपरन् । सर्पैः कृतेपि शतशो दंष्ट्राव्यापारे वनदेवताप्रसादादीश्वरानुग्रहाद्वा भीमो नाम्रियत । अन्येद्युरपि पुनराजीवन्तं निद्रारुण-नयनराजीवं तं भीममवलोक्य स मुग्धधीर्दुर्योधनः स्निग्ध इव [3]सग्धिकेलिकायामराला[4]रालिकद्वारा प्रच्छाद्य तस्मै विषमदापयत् । तद्वेगविह्वलं घूर्णमानशिरसं

---

१ पटीरं चन्दनम् । २ कुशीलवाश्चारणा गायका नटाः । ३ सग्धिः सहभोजनम् । ४ अरालः कुटिलः आरालिकः सूदः । कुटिलपाचकद्वारा ।

च तं गङ्गाजलेऽन्तर्विसर्जयामास। तद्विसर्जनेन स स्वहृदयशूलमपि विसर्जितं मेने। अन्तर्जले निमग्नो भीमः पातालं प्रविष्टः। पाताले तदागमनमाश्चर्य-करमिति चकितेन वासुकिनागेन कुन्तिभोजसम्बन्ध-सम्बन्धादसौ सत्कृतः। तत्राष्टौ दिवसाननैषीत्। तावदमी तद्भ्रातरो युधिष्ठिरादयोऽष्टासु दिक्षु तम-न्विष्टवन्तः। अमिलिते च तस्मिन् कुन्ती भृ-विलपितवती। किन्तु कुन्त्या नवममपि वासरमन-वममेव संजनयन् प्रभञ्जनसूनुर्भीमोऽमृताञ्जनैस्तद्दृशो-रञ्जयामास।

कुन्ती मिलितं तमालिङ्ग्य क्रोडे उपवेशयितु-कामयमानापि दशसहस्रकरिबलसमबलप्रदायिन-दशपीयूषकलशानां पाताले पानात् तस्य स्थूलीभूततय-तथा कर्तुं न शशाक। स तद्भुजान्तराले न ममौ-युधिष्ठिरादयः सोदरा भ्रातरं कुशलिनमवलोक्य हृदये-भिमानमानन्दं कौरवाश्चेर्ष्ययापरिमितं शोकमवापुः-ततः प्रज्ञाचक्षुर्धृतराष्ट्रः पञ्च पाण्डवान् शतं स्वपुत्रांश्-धनुर्विद्यायाः परं पारं नेतुं तेषां यशोपि च परां काष्ठां प्राप-यितुं गाङ्गेयं भीष्मं प्रति स्वाभिप्रायमसूचयत्। कृत्यवि-

१ नवमं अनवमं भवतीति विरोधः। परिहारस्तु-न अ-अनवमं अनधरं नवमात् परगामी न भवतीति वासरविशेषणं

भीष्मोऽपि [1]स्कन्दोपमेन कृपाचार्येण प्राक् तान् शिक्षयित्वा तेषां विद्यायाः प्रकर्षमापादयितुं दिशि दिशि ख्यातगुणं स्वं पौत्रगणं महतार्थराशिना सह द्रोणाचार्याय समर्पितवान्। समानविद्यानां परस्परयशः[2]पुरोभागितानियमेऽपि भीष्मेण सह द्रोणस्य तादृशं प्रेमाणमालोक्य हस्तिनापुरवासिनो जना महति विस्मये निपेतुः। द्रोणानुग्रहवशाद् युधिष्ठिरादयस्त्वरितमेव धनुर्विद्यायां सातिशयं नैपुण्यमलभन्त। कदाचित् स्नातुं गङ्गामवतीर्णस्य द्रोणस्य चरणग्राही कश्चिन्मकरोऽर्जुनेन बाणद्वारा हत इति तेन सन्तुष्टान्तरङ्गो द्रोणो गुरुदक्षिणार्थी सर्वविधधनुर्वेदविद्यापारगांस्तान् समस्तानपि स्वशिष्यानित्थमवदत्-अधुना यावद् यद् भवन्तो मयाऽस्त्रवेदमध्यापितास्तद्दक्षिणायां द्रुपदं राजानं गृहीत्वा मह्यमर्पयत। यतोऽसौ प्रतिज्ञाभङ्गेन मम द्रोहो वर्तत इति। एवं गुरुणा द्रोणेन चोदितास्ते युधिष्ठिरादयो दुर्योधनादयश्च सर्वेऽपि कौरवाः पाण्डवा अहंपूर्विकया द्रुपदनगरं निरुध्य चिरमयुध्यन्त। तत्र युद्धे दुर्योधनादिषु द्रुपदस्य निग्रहे किंचिद् व्यापृत्यो-

---

१ स्कन्दः कुमारः तत्सदृशेन। २ दोषैकदृक् पुरोभागी। समानविद्यः स्वसमानविद्यस्य यशसि दोषं पश्यतीति मानवस्वभावसुलभोऽयं नियमः।

परतेषु सत्सु खड्गसहायोऽर्जुनस्तं निगृह्य गुरुचरणयो-रार्पिपत् । तेन वीरकर्मणा गुरुरर्जुनाय सुतरामस्निह्यत भूयश्चाप्रीयत । लज्जावनतवदनं द्रुपदं पुरोऽवस्थितं दृष्ट्वा द्रोण इमां वाणीमभाणीत्—अरे क्षत्रियसत्तम ! किं स्मरसि पुरा महत्तर[1]मग्निदेश्यमग्निवेश्यं नाम मुनिमस्त्रपरिश्रमाय सप्रश्रयं मया सह शुश्रूषमाणस्त्वं प्रत्यज्ञास्थाः यत् पितुरनन्तरं निजाधिराज्यपदस्य प्रथममर्धं भवते वितीर्य ततः परमर्धमहमनुभवि-ष्यास्मीति । तत् प्रथममर्धं याचितुमागतं मां प्रति धिग् विप्रम् इति क्षुरप्रप्रायेण विप्रियवचनेन प्रथीयसीं व्यथां मम मनसि वितीर्णवता महार्णवपरिधानवतीं वसुमतीं स्वयमेवानुभवता ननु भवता तत् साध्वीयो निर्वर्तितं नाम । आबालवृद्धं समस्ता जनता [2]द्रुपदं यज्ञ[3]लसक्तं वक्ति तद् युक्तमेव वक्ति । डलयोरभेदात् । स्वीकृततादृशाख्ये त्वयि मित्र[4]तेजसो भज्यमानत्वाच्च । इति व्याजस्तुतिवचनेन सकलशिष्यगणसमक्षं द्रोणेन प्रधर्षितः पार्षतो द्रुपदोऽर्धराज्यं तस्मै प्रदायापि मनसा दुःखितो याजनामकस्य मुनेः प्राधान्ये यज्ञं कृतवान् ।

---

१ अग्निसदृशमुज्ज्वलम् । सादृश्ये देश्यः प्रत्ययः । २ द्रुममयं पदमिति ध्वनिः । ३ जडसक्तमित्यपि ध्वन्यते । ४ सूर्यतेजोऽपि व्यज्यते ।

यत्रार्जुनपरिणेयां द्रौपदीं नाम तनयां, रुद्रवद् रौद्रं द्रोणघातिनं धृष्टद्युम्नं नाम तनयं च वव्रे। इतस्तु तातो धृतराष्ट्रः स्वतपोभिर्लब्धं चक्षुरिव धर्मपुत्रं युधिष्ठिरं सिंहासनमधिष्ठाप्य यौवराज्येऽभिषिक्तवान्। पौराश्चानन्दाश्रुसलिलैस्तदानीमवनीमभ्यषिञ्चन्। विनैवायासं भुवं पालयतो महेन्द्रपराक्रमस्य नवयूनो धर्मसूनोर्युधिष्ठिरस्य करग्रहणेन राज्यसंपदतितरां ववृधे। दुर्योधनस्य मात्सर्यं चाप्यनैश्वर्यात् कलुषितमनोषितदूषितं सहैव समुज्जजृम्भे। युधिष्ठिरे धृतप्रेमापि ज्येष्ठतातो धृतराष्ट्रो धृताविनयस्वतनयदुर्योधनानुरोधाच्चेतसाऽन्धो जातः। मातुर्दोषाद् बहिर्नेत्रशून्यः स राजा पुत्रदोषादन्तर्नेत्रशून्योपि जज्ञे। दुर्योधनानुमत्यैवासौ चचाल, न तु युधिष्ठिरानुमत्या। यदि स विचारवान् अभविष्यत् तर्हि वृथा मत्सरिणमनिष्टकारिणं स्वैरं वैरायमाणं पाण्डवद्रोहिणं दुर्योधनमध्यक्षप्स्यत्। तं न्यगकरिष्यत्। कारागारे च न्यक्षेप्स्यत्। किंतु न तथा तेनेहा[५] तेने हा! स्वपुत्रं प्रति व्यामुग्धचेतसा। तद्धेतुक एवानुपदं कौरवपाण्डवयोः प्रजज्वालोज्ज्वालो भृशं विरोधानलः। अत एव '[६]सौबलीजानिरसौ बलीयसामर्षेण

---

५ तेन ईहा चेष्टा इति च्छेदः। परस्तात् तेने इति क्रियापदम्।
६ सौबली जाया यस्य सः। धृतराष्ट्र इत्यर्थः।

धर्षितः सहजविनयं धर्मतनयमाहूय कृतावहित्थो[1] गिरमित्थमुत्थापयामास—वत्स ! सम्प्रति वारणावतं पुरमुपेत्य वार[2]णाननगुरोरुत्सवं वारणाय विपदां निषेव्य तत्र वास्तव्यपौरजनभव्यया गिरा स्तोतव्यस्त्वं समस्तैरत्रस्तैरनुजैर्मनुजैः सह निरवधि-सुखामनुशाधि वसुधाम् इति । धर्मसूनुस्तु तातवचनं तद् दुरभिसन्धि हृदि विदन्नपि तथेत्यगृह्णात् । स्वानुजैः सह च तत्र गत्वा शत्रोर्दुर्योधनस्य प्रधानामात्येन पुरोचन-नाम्ना दर्शितमशनवसनशयनासनादिभिरशेषैर्वस्तुभिः पूर्णं जतुगृहमभजत । पुरोचनो नाम दुर्योधनमन्त्री प्रकटं पाण्डवानाराधयन्नपि तान् दाहयितुमवसरं प्रतीक्षमाण-स्तस्थौ । जातुचित् पञ्चभिरपत्यैः सह भृत्यभावमिषाद-मीषां पाण्डवानामामिषफलेषु विषं निनीषन्त्या दुर्योधन-प्रेषिताया विषादयोषित इव तस्य पुरोचनस्यापि निद्रायां[3] द्राघिमाणं दातुकामेन पवनसूनुना भीमसेनेन तत्र सद्मनि क्षणदाया[4]माशुशुक्षणिं क्षणान्निक्षिप्य तस्माज्जतुगृहाद् विदुरकिंकरकृतलिङ्गया सुरङ्गया निर्जग्मे । प्रातरुत्थाय

१ अवहित्था आकारगुप्तिः । विहिताकृतिगोपनः । २ वारणाननः गणेशः तस्य गुरुः शिवः । तस्योत्सवम् । विपदां वारणाय विपन्निवारणाय । ३ निद्रायां द्राघिमाणं दीर्घनिद्रां मृत्युमिति यावत् । ४ क्षणदा रात्रिः । आशुशुक्षणिः वह्निः ।

जागरितैः पौरैः प्रज्वलल्लाक्षागृहमवेक्ष्य पाण्डवा दग्धा इत्याकलय्य रुदद्भिः स्वाश्रुभिरेव स वह्निरुपशमितः। चारमुखेन चैषां पाण्डवानां भस्मीभावमाकर्ण्य मुदिता धार्तराष्ट्रा दुःखापदेशेन प्रमोदवाष्पं ससृजुः। तावत् सोपि गन्धवहसूनु[५]रन्धतमसबन्धुरं समुद्भ्रान्तशकुन्तकुलनिरुद्ध-निष्वामध्वानं विलङ्घ्य कस्यचित् काननकासारतीर-तरोरधिपरिसरमेतानवतार्य तत्परिरक्षणसक्षणः क्षणम-वतस्थे।

तत्र तरुतले काचिदतिप्रकाशा तरुणी तं भीमं प्राप। तडिदाभा सा सुन्दरी भीममेवं व्याजहार—इमां वनभुवं मम भ्राता राक्षसराजो हिडिम्बनामधेयो मानववधे नियमेन यमेन सदृशः स्वयं शास्ति। तस्य हिडिम्बानामिकानुजाहमस्मि। त्वामत्रैवं निर्भयमवस्थितं दृष्ट्वाहमतीव विस्मये। हिडिम्बेन त्वां व्यापादयितुमुक्ताप्यहं तव रूपसम्पदा सुतरामाकृष्टा सती त्वया सह रन्तुमिच्छामि। त्वं रिपुषु मारणं तन्वतामुना मा रणं कार्षीः। स हि मम भ्राता बलेन महान् वर्तते। अतस्तेन सह युद्धं मरण-निमन्त्रणमेव मन्येथाः। निजान् प्राणान् रक्षितुमपि मम पाणिग्रहणविषये त्वया त्वरणीयमिति। तावत्येव

५ गन्धवहसूनुः पवनपुत्रो भीमः।

रुधिरं पातुमाज्ञप्तायां हिडिम्बायां भीमस्य रूपसम्पदाकृष्टायां तदधरपानं कामयमानायां सत्यां स्वाज्ञापालने विलम्बमसहमानो हिडिम्बः कुपितो भुजास्फोटेन दिशो मुखरयन् प्रादुर्भूतः सन् भीमं प्रतीत्थं गिरमुज्जगार-अरे दुर्बुद्धे ! कोसि त्वम् । योऽत्र मृत्योर्मुखे इव वने वससि। क्व यासि । तिष्ठ । सद्योहमधुना त्वां यमपुरं नयामीति भाषमाणो भीमं तर्जयितुमायातः । तादृशपरुषाक्षरे तस्मिन् रक्षसि नेदिष्ठे सति भीमोऽप्यपमृत्युरिवो-दस्थात् । तत्र तयोः प्रवृत्ते तुल्यबलावलेपारुणो भीषणो रणः । पश्यन्त्यामेव हिडिम्बायां भीमो हिडिम्बं न्यवधीत् । तदनु तिमिरकदम्बेन हिडिम्बेन निर्मुक्तात् तस्मादहर्मुखादिव[1] वनात् सन्ध्ययेव सरागया तया कमलपालिकापरनामधेयया हिडिम्बया सह तपनभानव इव पाण्डुसूनवस्ते निष्क्रम्य शालिहोत्रमुनेः सरसि वीति-होत्रभासं[2] व्यासं भगवन्तमासेव्य तत्र तन्निदेशादहानि कानिचिदतिवाहयांचक्रुः । तस्मिन् सरस्तटे भीमेन मिथुनीभूय हिडिम्बा भीमसमं घटोत्कचं नाम तनय-मजनयत् । स च यदा क्वचन कर्मणि भवन्तो मां स्मरेयुस्तदा स्मरणमात्रेण संनिहितोहमिन्द्रस्यापि शक्तिं विफलीकुर्यामिति युधिष्ठिरादीनभिधाय मात्रा हिडिम्बया सह यथाभिमतदेशं ययौ । ततस्ते वन्याशनैर्धन्या

१ प्रत्यूषोऽहर्मुखं कल्यम् । २ वीतिहोत्रो वह्निः तत्सदृशभासम् ।

धारितवसुधा[1]सुधाशनाकृतयः प्रावृषमिव वकबला[2]क्रान्ताम् पातालभुवमिव प्रत्यहं [3]वर्धमानवलिशोकाम्, अङ्ग-राज्यसीमामिव सूर्यतन[4]यानुकूलप्रतिष्ठाम्, रविरथाक्ष-धुरमिवैक[5]चक्रां पुरीं क्रमादाक्रम्य कस्यचिद् गृहमे-धिनो गृहमध्यमेत्य सुखमध्यवात्सुः। तत्र तत्र गोष्ठीषु द्विजैः पाण्डवानां मरणं पृष्टाः वयमत्रैव तेषां [6]संस्थितिं विद्म इति द्व्यर्थैः पदैरव्यर्थं तदर्थं समर्थयन्तश्चकासा-मासुः। केनापि यक्षेण हिडिम्बो हत इति ब्रुवाणेषु प्रायेण द्विजेषु [7]समीरसूनोर्मुखं वीक्ष्याकूतगर्भं हसितं चक्रुः। एकदा सायमन्तर्गृहे निरवग्रहं निष्पतद्भिर्वाष्पै-स्तरङ्गितोत्तमा[8]ङ्गमपत्यमुत्सङ्गभुवि पुरोधाय यातु[9]धाना-पराधभयानुरोधेन मन्दितं क्रन्दितमुत्सृजन्तीं कांचन

---

१ सुधाशना देवाः वसुधायाः देवाः भूदेवाः। धारितब्राह्मणाकृतयः इत्यर्थः। २ वकानां पक्षिविशेषाणां बलेन समुदायेन आक्रान्ता-मिति प्रावृट्पक्षे। एकचक्रानगरीपक्षे तु वकस्य राक्षसविशेषस्य बलेनाक्रान्ताम्। ३ वर्धमानो वलिनामकराज्ञः शोको यस्यामिति पातालभूपक्षे। नगरोपक्षे तु वर्धमानः बलिभिः नरबलिभिः शोको यस्याम्। ४ अङ्गराज्यसीमापक्षे सूर्यतनयः कर्णः तदनुकूलप्रतिष्ठाम्। नगरीपक्षे सूर्यतनया यमुना तस्याः कूलमनु प्रतिष्ठा स्थिति-र्यस्याः। ५ रविरथधूःपक्षे एकचक्रयुक्तामित्यर्थः। ६ संस्थितिं मरणं, सम्यक् स्थितिं च। ७ भीमस्य। ८ उत्तमाङ्गं शिरः। ९ उच्चैः क्रन्दनेन वकयातुधानस्यापराधो भविष्यतीति भयादित्यर्थः।

काञ्चनकान्तिं विप्राय[10]ताक्षीमप्राक्षीत् कुन्ती समुपसृत्य विषादनिदानम् । सापि तां दयालुतया हृदि लगद्[11]गदां गद्गदाक्षरमाचचक्षे—अयि किं ब्रवीमि। यमुनातीरकानने वको नाम राक्षस एको निवसति यः स्वसुर्यमुनायाः स्नेहाद् आगतो यम इव प्रतीयते। सर्वेषां जनानां युगपदेव विनाशो मा भूदिति पौरास्तत्समीपं गत्वा प्रार्थनाभिस्तमनुनीय च निश्चितं चक्रुर्यदेकः पुमान् महांश्चान्नराशिः प्रत्यहं क्रमेण तव वलिरूपेणार्पयिष्यति, मा कृथा वृथा पुरजनकदनमिति तस्मै महतान्नराशिना समं पुमांसमेकमुपहरन्त्यत्रत्या जनाः। तादृशः प्रलयकालकठोरो वासरोऽद्य ममालयभूमेः सन्निहितः। अद्य मद्रक्ष्यो बालस्तद्भक्ष्यो भविष्यतीति चिन्ताचान्तस्वान्ता कथंकारमिमां विपदमुत्तराणीत्युदीर्य शोकसरःपूरमिव नयनसलिलं विशृङ्खलं खेलयन्त्यै तस्यै तनयेषु द्वितीयः समरेष्वद्वितीयः सुतः सखि ! ते मया दीयते। स एव तत्प्राणनाशने[12]बली भविष्यति। मा भैषीरिति प्रतिबोधयन्ती कुन्ती प्रत्य-

---

१० ब्राह्मणसुन्दरीम्। ११ हृदि लगन् गदो रोगो यस्याः सा हृदि लगद्गदा कुन्ती ताम्। १२ तस्य प्राणानां नाशने बली समर्थः तस्य प्राणनं जीवनसाधनं यदशनं भोजनं तत्र बली भविष्यति बलिरूपेण देयो भविष्यति।

श्रोषीत्। तमिममुदन्तं रहसि कुन्त्या गदितो भीमसेनः स्वबलावलेपान्मनसा वकं न लिलेह। अनसा[1]'धारितमन्नराशिमेव तु लिलेह। शौर्येण स्वविजये विश्वासशालितया वकस्य विषये न किमपि चिन्तितवान्। शकटस्थापितेनाप्रमाणेनान्नराशिना प्रभूत आहारो मे भवेदित्येव तु चिन्तयांचकार। अपरेद्युर्निखिलजनानन्दकरे भगवति दिनकरे मन्दे[2]हकुलमवस्कन्दयितुमुदयगिरिशिखरमधिरूढे भीमो दधिकुम्भसंभृतं शकटमधिरुह्य यमराजधान्याः शाखानगरमिव वकभवनवनं विवेश। तत्र गत्वा भुञ्जानश्चानःस्थमन्नराशिमाशु महत् क्ष्वेडितं[3] चक्रे। वकोऽपि तदिदं निशम्य वलिपुरुषविशेषमन्दितशकटागमनेन प्रथममेव कृतोन्मेषं रोषं द्विगुणयन् गिरिकन्दरमन्दिरमुखात् सरभसं विनिर्गत्य भीमाभिमुख प्राद्रवत्। ततः स्वभुजयुगलनियन्त्रणाभिः प्रतिरुद्धपरस्परप्रहारयत्नयोस्तयोर्भीषणं नियुद्धशिल्पं कल्पयतोरजघन्यं जन्यमजनि। न चिराद् भीमभुजदर्पो राक्षसस्त्रीनेत्रमेघेषु वर्षर्तुमध्यवासयत्। वकस्य रक्षसो विनाशाद् राक्षस्यो व्यरुदन्।

---

१ शकटेन। २ मन्देहाः राक्षसविशेषाः ३ सिंहनादम्।

मानुष्यश्चाहृष्यन् । प्रमथ्य तमाशर[1]मवसरे मातरमुपासरद् भीमस्तच्चरणावमन्दमवन्दत । तादृशस्य दुर्धर्षस्य वकाख्य-राक्षसस्य मृतं शरीरं दृष्टवतां पौराणां चेतांस्यानन्दाश्चर्याम्बुनिधौ मङ्क्षु न्यमाङ्क्षुः । वकवधानन्तरं पुरमुख्या भीमस्य गृहमागत्य शुभाशीर्भिस्तमभ्यनन्दयन् ।

अथ कदाचित् कश्चिद् द्विजः पान्थो निशि पाण्डवगृह-वेदिकां समया[2] समये सुखं सुप्त्वा प्रातरुत्थितः कथाप्रसङ्गेन पाण्डवानित्थमभ्यधात्—अद्य सर्वे भूपतयः कृतमतयः सकलयुवजनमनःसौधरत्नपाञ्चालिकां[3] पाञ्चालिकां[4] नाम द्रुपदात्मजां हृदि ममेति ममेति कृत्वा दूतैः समं द्रुतगतयः स्वयं तत्स्वयंवरमहोत्सवे सङ्गन्तुं द्रुपदराजराजधानीं प्रति प्रयान्ति । स हि राजा द्रुपदः कन्यावत्सलः । अतः स्वपुत्रीस्वयंवरावसरे निर्विघ्नतासंपत्तयेऽवश्यं ब्राह्मणेभ्यो भोक्तुं बहुसंपन्नं सरूपमन्नं गाश्च दोग्धुं स दास्यति । तस्मादस्माकं ब्राह्मणानामपि तत्र गमनं न निष्फलं भविष्यति । न च वस्तत्रापार्थता[5] भवेत् । युष्मासु विजयः[6] सिद्धिमुपैष्यति । समेषां युगपत् सुखं महद् बोभूयिष्यते

---

१ आशरो राक्षसः । २ समीपे । समयाशब्दयोगात् वेदिकामिति द्वितीया । ३ पाञ्चालिका काष्ठपुत्तलिका । ४ पाञ्चालीं द्रौपदीम् । ५ अपार्थता वृथात्वम्, पार्थस्य अर्जुनस्य अभावश्च । ६ विजयः अर्जुनः सिद्धिलाभश्च ।

इति द्रुततरं तत्र गन्तव्यमिति। रात्रिचरमयामोक्ततया सत्यमिदं ब्राह्मणवचनं भवेदिति मनसि कृत्वा ब्राह्मणैः सह पाण्डवा द्रुपदनगरं प्रति चेलुः। चलितेषु तेषु बहुभिर्दिवसैर्जनपदवनसीमानमतिक्रान्तवत्सु पुनरपि व्यासः समुपस्थाय तेषां जतुगृहाद् रक्षावृत्तान्तं राज्ञे द्रुपदाय श्रावितमुपवर्ण्य महान्तं हर्षमुदपादयत्। अनन्तरमर्जुनकर-धृतालाततेजसा दूरीकृताध्ववर्तितमसस्ते गङ्गातटमवापुः। तत्र गङ्गायाः पयसि स्थितानां कमलानां मध्ये वसन्त्या लक्ष्म्याः प्रतिबिम्बानीव गन्धर्वराजचित्ररथस्य रमण्य आसन्। ताभिः सह जलकेलिप्रवृत्तश्चित्ररथः पार्थाना-गच्छतः समवलोक्य स्वरहस्यविघ्नमुत्प्रेक्षमाणस्तान् हन्तु-मिच्छया रुरोध। धनञ्जयस्तत्र युद्धे चित्ररथस्य यानं धनञ्जया[1]स्त्रेण लाक्षागृहमिव दग्धवान्। गर्वंजुषो गन्धर्वपते-श्चित्ररथस्य तस्मिन् सुरसिन्धुसम्बन्धिनि पायसि[2] भङ्गस्तु[3] शिशिरोऽभूत्। रोधसि[4] भङ्गः परं तापहेतुरभूत् तथापि पाण्डवानां सख्यस्य लाभात् सपदि प्रहृष्यन्नसौ प्रथमं पुरोहितेन सह राज्ञा गन्तव्यमित्येवं स्वां विनीतिं[5] प्रादर्शयत्। पश्चादमीषां रम्यां पदवीं च निरदिक्षत्।

---

१ धनञ्जयोऽग्निः। आग्नेयास्त्रेणेत्यर्थः। २ जले। ३ जल-तरङ्गभङ्गः। ४ तटे मानभङ्गः। ५ विनयं, विशिष्टां नीतिं च।

ततश्चित्ररथप्रदर्शितेन मार्गेण गच्छन् धर्मपुत्रो युधिष्ठिरः सौम्यं धौम्यं नाम मुनिं ज्ञानविज्ञानसम्पदा सम्पन्नतया विख्यातं ब्राह्मणं पुरोहितं पुरःसरन्तं ददर्श । विनयपुरःसरं तं प्राणिनामहिंसकः सन्नपि स प्रसन्नः सोदरैः सह पादपीडनेन[1] सच्चकार । तं च मुनिं स्वपुरोहितपदे प्रतिष्ठाप्य तत्कृतातिथ्यसत्कृताः पाण्डवास्तमग्रे कृत्वा पथि चेलुः । धौम्येव प्रस्तुताभिस्ताभिरतिमधुररसाभिः स्वयंवरकथाभिराकृष्टचित्तास्ते वर्त्मनि श्रमं नान्वभूवन् । गच्छन्तस्ते सहैव द्रुपदराजधानीं ददृशुः । सहैव च तेषां दक्षिणनेत्राण्यपि शुभव्यञ्जकान्यस्फुरन् । द्रुपदपुरे गतास्ते प्रथमं कुलालगेहं प्राविशन् । तत्रैव द्रुपदपुत्रीस्तनोपमानभूतघटदर्शनस्यायत्नसंपाद्यत्वात् । पाण्डवैः सहान्येपि ससैन्या भूयांसो भूपाः शतशो वन्दिभिः स्तूयमाना द्रुपदनगरीमागमन् । यदुबलरजसां श्रेणिभिर्द्यावाभूमी निरुन्धन् सीर[2]पाणिर्यो हालां पिबति हलं च धारयति यस्येमे द्वे अपि मिलतो सती युद्धे शत्रूणां कृते हाला[3]हलभावं धारयतः सोपि स्वविनयगुरुणा शौरिणा[4]न्वीयमानस्तत्र स्वयंवरे वेगादा-

---

१ पादपीडनेन चरणसंवाहनेन । योऽहिंसकः स कथं पादौ पीडयेदिति विरोधः । परिहारस्तु प्रोक्त एव । २ सीरपाणिः बलरामः । ३ हालाहलं विषम् । ४ शौरिणा श्रीकृष्णेन ।

गात् । पार्श्वयोः पुरस्ताच्च मणिदीप्रकुण्डलभरं कर्णत्रयं[1] बिभ्राणः स्वप्रतिबिम्बैरिव नवनवत्याऽनुजैः सह परिवृतो दुर्योधनोपि तत्र समासीदत् । सर्वेषु राजसु समायातेषु यथास्वमिष्टेष्वासनेषूपविष्टेषु परिष्कृता श्रीरिव पाञ्चाली द्रौपदी परिजनैः सार्धं रङ्गस्थलीं प्राविशत् । सर्वेपि राजानो निर्निमेषनयनास्तामपश्यन् । ब्राह्मणगोष्ठ्यां स्थितोऽर्जुनो यदा द्रौपदीमैक्षत तदा तस्य दक्षिणो बाहुः प्रास्फुरत् । मन्ये तदोयमन्तर्बलं प्रकाशमासादयितुमन्तर्व्यापारमिव व्यधत्त । तावत् सरभसमुपेत्य साक्षाददेष्टुमनाः प्रद्युम्न[2] इव धृष्टद्युम्नः सायकैः साकं सकाशमुपनीतं स्वयंवरदिदृक्षया सपरिवारं प्रत्यासन्नमिव पन्नगपतिं चापं पुरस्कृत्य कन्यावलोकनधन्यान् राजन्यानेवमवादीत्-अये राजानः ! यथाकाशे दृश्यमानस्यास्य यन्त्रस्य छाया भुवि पतति तथा यो वीरो बाणेन यन्त्रमिदं विद्ध्वा भुवि पातयितुं पटुर्भविष्यति स दक्षिणे पाणौ यथा मौर्वीं धारयन् भविष्यति तथैव तेन हस्तेन मम भगिनीं द्रौपदीमपि पत्नीत्वेन ग्रहीष्यतीति वीर्यशुल्केयं राजपुत्री, न कुलधनादिशुल्का तत् प्रदर्शयत पराक्रमम् इति । धृष्टद्युम्नवचः

---

१ पार्श्वयोः स्वशरीरावयवौ द्वौ कर्णौ । पुरस्ताच्च कर्णनामकस्तत्सखः । एवं कर्णत्रयं सम्पद्यते । २ प्रद्युम्नः कामः ।

श्रुत्वा राजान उत्थाय धनुःसमीपं गत्वा धनुरुत्थाप्यापि च तावता श्रमेणात्मानमेव पीडामलम्भयन् । मौर्वी तु तै धनुष्कोटावारोपयितुं नाशक्यत । अथ देवेन्द्रपुत्रोऽर्जुन स्तद् धनुरारोपयितुमशक्तं राजकं दृष्ट्वा द्विजसंघमध्यात् सदसि निर्गत्य निजकरधृते चापे शरं, भूपेषु लज्जां, द्रौपद्यां च भूरि कुतुकं समधत्त । यदार्जुनः स्वबाणेन लक्ष्यतया कल्पितस्य यन्त्रस्य मूलाधारमच्छैत्सीत् तदा चक्रवद् भ्रान्त्वा तद् यन्त्रमस्मिन् नरसमाजवलये ह्ययमेव दोष्मा नित्यवोचदिव । अर्जुनेन छिन्ने मत्स्ययन्त्रे देवैः कीर्णं पुष्प तमभितः पपात । तच्च पराक्रमश्रियो मन्दहासत्वेन लोकै रुत्प्रैक्ष्यत । पाण्डोस्तनूजमर्जुनं परितः पाञ्चालपुत्र्या प्रहिताः कटाक्षा ववल्गुः । तदनु स महावीराग्रेसरः समग्र गुणशेखरितां नरपतिसुतामिव शरासनलतामुद्वहन् राज्ञां बलमवज्ञाय सभाङ्गणात् क्षणान्निश्चक्राम । तदाऽवे एव खलु खलोऽयमखिलान् अस्मानतिस्मयेन विस्मरन् कस्मैचिद् दुहितरं विप्राय प्रायच्छदिति द्रुतं द्रुपदाय द्रोहमुन्निद्रयतः कतिचन राजन्यान् जन्याभिमुखान् प्रति सुलभोन्मेषेण रोषेण सरभसं भुजोन्नीतैरुपवीतैः कण्ठमावेष्ट्य ममायं यष्टेर्ममायं विष्टरस्य लक्ष्यमिति वचनेन चातिचापलं कुर्वाणान् धरणि[1]गीर्वाणान् भवतां पुनराशीरेव जयराशी

१ ब्राह्मणान् ।

करणायालमिति सस्मितं निवर्तयन्नमर्त्यपति[1]कुमारो युधि समारोपितधनुर्गुणनिर्गलनिर्गलितेन शरनिकरेण तेषां परेषामधिकां दिशि दिशि कान्दिशीकतां[2] दिदेश। तावदस्य राजसंघस्य जङ्घा[3]लतामनुकुर्वद्भिरिव[4]रथार्वद्भिरपरार्णवाभ्यर्णमवतीर्णवति तूर्णमर्णोज[5]बन्धौ तेन निहितां दीप्तिमपरामिव तां दयितामनुरञ्जयन्नयमपि धनञ्जयस्तामेव वासभुवमाससाद। अन्येद्युः पाञ्चालो राजा द्रुपदः पञ्चापि पाण्डुतनयान् युधिष्ठिरादीन् स्वगृहमुपनीय संपूज्य च व्यासोक्त्या विदितशिववरः पञ्चभिः सहैव सुताया द्रौपद्याः परिणयमनुमेने। ततः परमोदृशोत्सवश्रवणात् परमानन्दमनुभवन्तीभिरन्तःपुरिकाभिः परिवृतां तां शुचिस्वान्तां शशिकान्तां द्रौपदीं सखीजना मण्डनमण्डपिकामुपनीय प्रसाधयितुमारभन्त। प्रसाधितामेनामालोक्य स्वयमपि सन्ध्यारुणिमसम्पादितलाक्षाकृत्याम् अञ्जन[6]तिलकरञ्जितमुखभागां परिणेतुमिव प्रतीचीं दिशमुपगतवति भगवति भासां[7]निधौ तस्यामेव क्षपायां निजकुलभूषणपार्थोत्सवविलोकनायेव साक्षाद् द्यां विशति हिमरुचौ[8] शुभंयौ मुहूर्ते सालंकारा युधिष्ठिरादयः कुमारा

---

१ इन्द्रपुत्रः अर्जुनः। २ भयद्रुतताम्। ३ वेगवत्ताम्। ४ रथाश्वैः। ५ कमलबन्धौ सूर्ये। ६ अञ्जनस्य तिलकेन रञ्जितः मुखभागो यस्याः। प्रतीचीदिक्पक्षे अञ्जनतिलकौ वृक्षभेदौ। ७ भासांनिधौ सूर्ये। ८ हिमरुचौ चन्द्रे।

मरकतखचितैः सोपानैः सरभसपुरोधोविहितैः संविधानै पूर्णां यज्ञवेदिमध्यरुक्षन्। तत्र मुहूर्तगुणेष्विव समन्तादोजायमानेषु दीपेषु मन्त्रविदां वदनेष्विव शब्दायमानेषु वाद्येषु कुलपालिकाः कमनीयमणिकोरकितैः कनकभूषणैरविकृतसहजरामणीयकां द्रौपदीममीषां सकाशे निवेशयामासुः। पुरोहितो धौम्यो वेद्यामग्निस्थापनाङ्गभूतं कुशास्तरणं कृत्वाग्निं स्थापितवान्। ततो द्रुपदराज इवानलोऽपि हे पाण्डवाः! यूयमनया मत्सुतया द्रौपद्या सह श्रौतान् स्मार्तांश्च धर्मान् बह्वीः प्रजाश्च संचिनुतेति शाम्यत्समिच्चटचटात्कृतिभिर्ब्रुवाण उन्नतशिखाग्रकरेण तेभ्यस्तामात्मजां द्रौपदीं प्रादात्। विवाहसंस्कारकाले पाण्डवा द्रौपद्या सहाग्निं परितो बभ्रमुः। द्रौपदी च पतिभिः कार्यमाणं स्वपदेन शिलारोहणं कृतवती। एवं चामी चामीकरप्रतिमा राजकुमारा यथा स्वभुजवीर्यं साक्षीकृत्य शत्रुनृपराज्यस्य करं क्रमशो गृहीत्वा प्रसन्नतां यातास्तथैव वह्निं साक्षीकृत्येच्छानुरूपं ज्येष्ठानुक्रमेण राजकुमार्या द्रौपद्याः करं गृहीत्वा प्रसन्नतामापुः।

एवमन्तरिक्षनिक्षिप्तलक्ष्यवेधनलक्षणेन शुल्कनिष्केण निजकण्ठनिष्कायित[1]कन्याभुजलतानेतान् पथि कौन्तेयान-

[1] भूषणीकृतद्रौपदीभुजलतान्।

वगन्तारो दुर[2]हन्तारोपितनिवर्तनमतयो विकर्तन[3]तनयोपायविधेयैः सहायैः सह संमन्त्र्य समारब्धपूर्वस्य युद्धपलायनाध्ययनस्य द्वितीयावृत्तिविच्छित्तिं परिजिहीर्षन्त इव शकुनिभागिनेयाः सेनापुरःसरदुन्दुभिध्वानैर्द्रुपदपुरं पुनरपि निरुध्य निरुच्छ्वासयांचक्रुः । तत्क्षणमेव सत्वरं निर्गतेषु विविधैरायुधैरशून्येषु द्रुपदसैन्येषु रथाधिरूढाः पृथासुता अपि द्विधा विचार्येव नगरान्निरीयुः । निजशरैर्द्विषतश्चूर्णान् विधातुम् । द्विषत्सुभ्रुवामलकांश्चाचूर्णान्[4] विधातुमिति । परस्परं संमिलितानां शरसंधानादिव्यापृतकराणामपि तेषां धनुर्धराणां रणस्य नवत्वात्[5]क्षणं बाणगणोपरोधात् कस्यापि व्रणं नाभूत् । ततः कर्णप्रेरितबाणैर्भिन्नधैर्येषु पाञ्चालेषु पलायमानेष्वर्जुनः कर्णेनसह प्रतियोद्धुं स्वं धनुष्टंकृतवान् । तेन जनने इव प्रधनेपि वृकोदरद्वितीयेन करोदरपरिकर्मीकृतस्य कार्मुकस्य वर्मनिर्माथिभिः शरोर्मिभिर्निकृत्तमर्माणो भयविसारिभिः स्वेदवारिभिः स्त्रपदान्येव यानपदेऽभिषिञ्चन्तः पार्थयशश्चतुर्थीचन्द्रकलावलोकनं परिहर्तुमिव

---

२ दुष्टया अहंतया अहंकारेण आरोपिता निवर्तनस्य युद्धार्थमागमनस्य मतिर्येषां ते । ३ विकर्तनतनयः कर्णः तस्योपायवश्यैः । ४ चूर्णकुन्तलरहितान् । ५ नूतनत्वात्, न विद्यते वकारो यस्मिन् तत् नवं तस्य भावस्तत्त्वात् । वकाररहितत्वाच्चेत्यर्थः । यस्मिन् रणे वकारो न भवति तत् केवलं रणमेव न तु व्रणम् । वकारयुक्तत्वे तु व्रणं सम्पद्यते ।

समराजिरान् मुखं निवर्त्य सौबलेयाः[1] केवलैरेव बाहुभिः कुरुपुटभेदनं प्रतिपलायाम्बभूवुः । इत्थं युद्धे विजयं लब्ध्वा परावृत्ताः पाण्डवा द्रुपदपुरे भगवता कृष्णेन सह द्रुपदकृतां सपर्यामुपभुञ्जानाः सुखमासामासुः । तेष्वधिकपराक्रमाकृष्टा द्रौपद्यर्जुनायाधिकं स्निह्यन्ती तत्प्रीतयेऽधिकं तमैक्षत । पाण्डवानामीदृशं पराक्रमं श्रुत्वा विदुरद्वारा तानाहूय च धृतराष्ट्रः कृष्णस्याग्रे स्वराज्यस्यार्धं भागं युधिष्ठिराय दत्तवान् । मन्ये स धृतराष्ट्र इति स्वां संज्ञामेवान्वर्थां राज्यधारित्वार्थिकां तस्मै विभज्य ददौ । युधिष्ठिरं पौराः स्वनेत्रं मन्यन्ते स्म । यतस्तस्मिन्नभिषिच्यमाने तद्वदेव पौराणां नेत्राण्यपि हर्षाश्रुसिक्तान्यभवन् । तस्मिश्च कुङ्कुमलिप्तशिरसि यथा स रक्ताङ्गः समजनि तथैव पौरनेत्राण्यपि सरागाणि प्रेमपूर्णान्यजायन्त । वन्दिभिः स्तुतेऽथ तस्मिन् यथा स स्तब्धः समजायत तथा पौरनेत्राण्यपि स्तब्धान्यभूवन् । अतः सर्वथा लोकानुरञ्जकोऽभूद् युधिष्ठिरः प्रीतिपात्रं चक्षुरिव हृदयहारिगुणसाम्यात् ।

द्रौपदीविवाहान्तरं धृतराष्ट्रप्रदत्तस्वराज्यार्धभागमुपादाय हस्तिनापुरादारादिन्द्रप्रस्थे कृतवसतीनां पाण्डवानां भगवता कृष्णेन सह संलपतां सतां सुखेन कालो गच्छति

---

१ गान्धारीतनयाः ।

स्म । कियन्तं चित् कालं तत्रोषित्वा स्वपुरेपीन्द्रप्रस्थ-सदृशीं सुषमां परीक्षितुमिव भगवान् यदुनन्दनः स्यन्दनेन द्वारकां प्रययौ । एकदा पाण्डुपुत्रान् दर्शनप्रदानेन नुग्रहीतु-कामो वीणाविनोदरसिको नारदो मुनिराविरासीत् । आगतं मुनिं वीक्ष्य पाण्डवास्तं चरणयोः प्रणेमुः । अभ्युत्था-नासनदानादिसत्क्रियया चार्चयामासुः । नारदस्य समीपे स्थित्वा तत्संगमसुखमनुभवन्तो युधिष्ठिरादयः किमर्थमय-मायात इति विषये दूरविभावनासक्तचित्ता अभूवन् । उपविष्टो नारदो वीणां स्वाङ्के निधाय पाण्डवैः सह संलिलपिषया वीणावादनान् न्यवर्तत । एकान्तं शान्तं निशान्तं चावगम्य दान्तस्वान्तांस्तानित्थमभाषत—हे पाण्डवाः! युष्माभिर्लाक्षागृहदाहाद् यदच्याविि, साक्षादिव रतिः प्रिया द्रौपदी च यद् व्यवाहि तन्नः प्रसन्नतायै संपन्नम् । स्वतः प्रतिभातमतीनां वः कुतोऽन्यदनुशासनं स्यात् । तथापि किञ्चिद् रुच्यमपोच्यं तथ्यं पथ्यं च वचो भवत उपदिशामि । द्रौपद्या युष्माकं च दाम्पत्यलक्षणः सम्बन्धः सातिशयं पावनः । दम्पतिशब्दो जाया च पतिश्चेति विग्रहेण स्वभावतो जायामेकां तत्पतिं चैक-मभिधत्ते । न त्वेकाधिकपतिसहचरितामेकां भार्याम् । यूयं पाण्डवा द्रौपदी चाश्चर्यंकरं दम्पतिशब्दवाच्यत्वं भजथ । एका द्रौपदी भार्या भवन्तश्च पञ्च पाण्डवाः पतय

इत्यद्भुतमभूतपूर्वमिव दाम्पत्यं प्रतिभाति । एकमेव वस्तु युगपत् कामयमानाः सुधियोऽपि विरुध्य मरणान्तं तत्फलमाप्नुवन्ति । एकामिषाभिलाषो हि मूलं वैरमहातरोरित्याहुर्व्यवहारविदः । सुन्दोपसुन्दौ नाम सोदरौ राक्षसौ तिलोत्तमां कामयमानौ परस्परप्रहारेण मृतौ । तौ हि देवेष्वभीकौ[1] तिलोत्तमायामप्यभीका[2]वास्ताम् । तेन संभवति भवतामपि सौभ्रात्रं कामस्य चापबाणौ छिन्द्यातां तत्तथा मा भूदिति तद्विषये पूर्वमेव भवद्भिर्दत्तावधानैर्भाव्यम् इति । इति रहस्यं नारदमुनिशंस्यं प्रशंस्यं शुभोदर्कं तर्कयन्तस्ते कौन्तेयास्तस्यैव समक्षमसिधारासगन्धां सन्धामिमामाबबन्धुः—एते वयं चातका इव जीवनमयं वर्षमेकैकमवलम्ब्य प्रियया सममनया सुखेन वत्स्यामः । तथाभूतेष्वस्मासु यो मिथुनकृतोपवेशे देशे दृशापि प्रविशेत् सोऽमुं वृजिनं विहातुमजिनं परिधाय सुकृतसार्थसमर्थापकतीर्थपरिमृष्टास्वष्टासु दिक्षु तत्त्रिगुण[3]संख्यान् पक्षान् क्षपयेदिति । इत्थं युधिष्ठिरादिभिर्नारदोक्तमर्थं स्वीकृतवद्भिः सद्भिः स्वीयमनन्यसामान्यं सौजन्यं प्रकटीकृतम् । तेन च वचसा तेषामसिधारव्रतेन प्रीयमाणो नारदो वीणामुपवीणयन् शुभाशीर्भिस्तान् संयोज्य यथेतं प्रयातः ।

---

१ भयरहितौ । २ कामुकौ । ३ अष्टानां त्रिगुणा संख्या चतुर्विंशतिर्भवति । चतुर्विंशतिः पक्षाश्च द्वादश मासाः सम्पद्यन्ते । वर्षमेकमिति

कदाचिदेको ब्राह्मणो युधिष्ठिरस्य द्वारमायातः सन्नाक्रोशत्–मम गावश्चौरैर्हृताः। त्वं च मुधा तिष्ठसि। राज्यं मुञ्च। तव राज्ये स्थितिर्नोपयुक्ता। न त्वया किंचिदुपक्रियते प्रजानामिति। तमाक्रोशन्तं विप्रं दृष्ट्वा मधुरस्मितोऽर्जुन आसनादुत्थाय तदङ्घ्रौ नत्वा सप्रश्रयमुवाच–ब्रह्मन्! मा स्म कुपः। आगमयस्व कञ्चित्कालम्। अहं ते भृत्यकल्पः। सङ्कल्पयामि तव चौरापहृता गावो द्रागित्येव परावृत्य त्वद्गृहमागमिष्यन्ति। तत्राधिकः प्रयासो नापेक्ष्यते। इत्येवं ब्राह्मणमाश्वास्य स प्रथमं मनसा दस्यून्, परतश्च शस्त्रमासादयितुं भ्रातुर्युधिष्ठिरस्य रहो विश्रामागारं प्रविष्टः। तस्मिन् भवनेऽर्जुनो युधिष्ठिरं द्रौपद्या सह शयानं ददर्श। तेन तस्यैको विप्रवासश्चतुर्विंशतिं पक्षान् यावत् तीर्थप्रवासः पूरणीय आपतितः। तत्रैव गृहे चासौ शरयुतं स्वं धनुर्गृहीतवान् येनापरो विप्रवासो ब्राह्मणस्य तस्य गोप्रदानात् स्वगृहे वासः पूरणीयो भविष्यति। चापमादाय चलितोऽर्जुनस्तस्करान् गतजीवितान् विधाय ब्राह्मणस्य गा इव तदीयाः शुचोऽपि प्रतिनिवृत्ताश्चकार। ब्राह्मणस्य गाः प्रत्यावर्त्य नियमरक्षार्थं तीर्थभ्रमणायोद्यतोऽर्जुनो युधिष्ठिरस्य चरणयोः प्रणतः। तस्यां तिथौ तद्वियोगभीतस्य तस्य नयनाभ्यां प्रवहन्नश्रुभरोऽर्जुनस्य शिरसि

पतित्वा तं स्नपयामास । मन्येऽर्जुनस्तीर्थप्राप्तेः पूर्वं
नियमाभिषेकं प्रापदिति । स धीरधीरतिकृच्छ्रेण रा
युधिष्ठिरेण कृताभ्यनुज्ञो वल्कलं घनं घनाघलङ्घना
परिधाय कुवेरगुप्तामुत्तरां काष्ठां प्रतिष्ठमानस्तपःप्रस
धितस्य भगवतो भवानीवल्लभस्य साक्षात् कृपापि
भगीरथरथपथानुसारिणीं तरङ्गिणीमुपगम्य तत्र पवित्रा
वीचिषु सायंतननियमाय ऋचोऽघमर्षणीर्जपन् मज्जनमक
र्षीत् । तत्र काचनोलूपी नाम नागकन्या पयसि स्नान
मर्जुनं दृष्ट्वाऽऽकृष्टचित्ता तं पूर्वं हृदये स्थापितवती, पश्चा
स्वगृहं प्रापितवती । दुर्लभसमागमं नरं रञ्जयितुं तदन
भूतनागलोकोचितरतानि प्रकाश्य तं विनोदितवती
साऽर्जुनकृतं रतं प्रशंसन्ती यन्मस्तकमकम्पयत् तेन शिर
स्थितं तन्मस्तकरत्नमभ्यन्तरमार्गाच्च्युतं तदिव प्रकाश
मान इरावान् नाम पुत्रस्तयाजन्यत । तत उलूपीभव
निशामेकामतिवाह्य दीर्घैः श्वासैः समं तया गन्तुमनुमतो
ऽर्जुनो गङ्गातीरमाससाद । ततो हिमवन्तं नाम पर्व
जगाम । यत्र महाप्रभावा ओषधयः प्रभवन्ति । त
हिमाचलस्य कटकसरसीषु वृजिनानि विशोध्य वनदन्ताव
कलभविदलितसरलद्रुमप्रवालपरिमलसुरभिलेनोपत्यका-
वर्त्मना दिवि भुवि भरणकुशलाभ्यां महेन्द्राख्याभ्यामिन्द्र
पर्वताभ्यां परिगृहीतां प्राचीं हरितमव्रजगाहे । प्राची

दिशमुपेतोऽर्जुनो महेन्द्रस्य पर्वतस्य प्रत्यन्तभागे नवविकसितकेतकीपरागपूर्णनिर्झरजलैः सम्पादितस्नानः सन् स्वपितुर्नाम्ना समाननामानं महेन्द्रं चरणे चिरं चचार। ततो मलयाद्रिणा युक्तायां दक्षिणस्यां दिशि दत्तदृष्टिः स्वशरीरधृतवल्कलोत्थरवेण तालतरुपत्रध्वनिमनुकुर्वन् नानानदीप्रवाहस्थलानि पश्यंश्चासौ जलधितटगामिनाध्वना चचाल। तत्र दृग्गोचरातिशायिनं पयोधिं दर्शं दर्शं वेगेन गत्वा चोलदेशस्थिताभिर्वनिताभिः स्वीयमुखकुचादिषु लिप्यमानहरिद्रासुगन्धपूर्णान् वायूननुबभूव। चोलं गतस्य तस्य लङ्कामिव सर्वथा समृद्धां मणिलूरपुरं नाम पाण्डवराजधानीं प्रति गमनमभूत्। तत्र तेन चित्राङ्गदा नाम राजकुमारिका व्यूढा। या दर्शने दौहृदा, आर्तौ चानङ्ग[1]दैवासीत्। अर्जुनेन गर्भिणी सा तदनुरूपं बभ्रुवाहनं नाम सुतं सुषुवे। तं चात्मजं तद्देशजेभ्य एव स प्रादात्। तत्र कानिचिद् दिनान्युषित्वा रक्षोयोधिभिरिक्ष्वाकुपतिसेनाध्यक्षैरुत्पाटितानां मलय[2]दर्दुरमहेन्द्रपादानां मूलशिलातलसंनिवेशावटैः स्थ[3]पुटितामटवीं विलङ्घ्य सेतुना कृतसीमन्तमुदन्वन्तमभजत। तत्र सेतु-

---

१ अनङ्गदा कामविकारप्रदा, अङ्गदं केयूरं तद्रहिता च।
२ मलयादयः पर्वतविशेषाः तेषां पादानां प्रत्यन्तभागानाम्।
३ निम्नोन्नताम्।

बन्धस्थले वानरपातितशिलाघातैर्नष्टाक्षिपाणिपाद
कायन्तिराशक्त्या वोचिवीथिमुपविश्य रामचरितं गाय
जलमानुषान् प्रशंसन्नसौ समुद्रतटवर्त्मना प्रतीचीं दि
प्रतस्थे । तत्र गोकर्णतीर्थे स्थितस्य शिवस्य शिर
पुष्पाण्यवाकिरत् । मन्ये संभाविनि किरातयुद्धे शिव
मूर्धनि बाणान् धारयति इति । सेतुबन्धदर्शनादेव क्षीण
स्यार्जुनस्य ततः प्रभासतीर्थक्षेत्रे कृतोभिषेकः सुभद्राप्राप्
वुपाकरोत् । पुण्यस्य पापक्षयशुभोदयोभयहेतुतया पा
क्षयेऽचरितार्थत्वे शुभोदयजननस्वाभाव्यात् । प्रभासतीर्थे
सुभद्रासौन्दर्यकथाः श्रवणातिथीचकार । सुभद्राप्राप्ति
विषयं कमप्युपायमाचरितुं हरिं मनसा दध्यौ । हरिर्भगव
श्रीकृष्णश्च तस्य हृदयं विहाय पुरः प्रकटीबभू
परस्परस्नेहिनोस्तयोः प्रकटितरहस्या विशिष्याला
समभूवन् । श्रीकृष्णसंमत्या स प्रच्छन्नभिक्षुवेषः
रैवतकपर्वतस्य गुहागृहे तिष्ठति स्म । तदानीं तं समाश्वा
तदिष्टसम्पादनौपयिकं विधिं विधातुं श्रीकृष्णो द्वारका
यात् । तदनन्तर[4]महस्करमदतस्करमहा महान् मस्क
रैवतकं गिरिमुपस्कुरुते[6] । तस्य नमस्करणमस्म
श्रेयस्करणमिति पुरोधोजनबोधनात् कुतूहलिना हलि

४ अहस्करः सूर्यः तस्य मदतस्करः तेजश्चौरः महः तेजो
सः । ५ परिव्राजकः ६ अधिवसति । ७ बलरामेण ।

नगरमानीयमानं बहिरपि ज्वलता विरहानलज्वालेनेव काषायवाससावगुण्ठितवपुषं त्रिदण्डीं बिभ्राणं कपट-भिक्षुमर्जुनं संभ्रमेण वन्दमानेषु यदुवृन्देषु मुकुन्दोपि सविनयमुपागतः स्वसोदरीप्रेमरसैरिव तीर्थजलैः पिचण्डिलं कमण्डलुं तदीयपाणेरादाय भगवन् ! इत इत एहीति राजभवनमुपनीय कन्यकान्तःपुरे निवेशयामास । एकदा चामूरवीं[1] त्वचमध्यास्य विश्राम्यन्तं तं कुहना[2]-संन्यासिनं धवित्रेण वीजयन्ती सुभद्रा सादरमनुरहसं मधुरहस[3]मवादीत्—भगवन् ! भवदागमनजन्यो हर्षः कन्यामपि मामप्रष्टव्यविषयप्रश्ने व्यापारयति । इदानीं भवदागमेन भवत्पादभवं रजः शिरसा गृह्णन्तो निजहृदय-गतं रजो विजहतोऽमी यादवाः सातिशयपुण्यभाजो जाताः । भवादृशा यतयः सर्वज्ञा अतो मदीयं भविष्य-च्छुभं मह्यं कथयेति । तदासावित्थं प्रतिवाचमाददे—अयि भद्रे सुभद्रे ! किं बहुनोक्तेन । त्वं निजैः सौन्दर्यादिभि-र्गुणैर्योषितां कुले विजयं[4] प्राप्स्यसीति । तस्य वक्रिम-स्पृशा वचसा श्रवसा च विश्रुतपूर्वैस्तैस्तैर्लक्षणैः सोऽयं

---

१- चमूरु मृगविशेषः तत्सम्बन्धिनीम् । २- कपटसंन्यासिनम् । ३- मधुरः हसो हासो यस्मिन् कर्मणि तद् मधुरहसमिति क्रिया-विशेषणम् । ४- विजयं सर्वोत्कृष्टत्वम्, अर्जुनं च ।

संक्रन्दननन्दनोऽर्जुन एवेति निश्चित्य सा तस्मै व्रीडातरलतरनयनं वदनमवनमन्ती तस्थौ । सोपि भावाभिज्ञः कपटयतित्वं निराकृत्य स्वमर्जुनं घोषयित्वा सुभद्रां कपोले चुचुम्ब । तेन चुम्बनेन सुभद्रायाः शरीरे प्रकामं कामः शृङ्गारतरुजनकान् रोमाञ्चबीजराशीन-वाप्सीत् । सुभद्रापि तदार्जुने दृढं बद्धानुरागा जाता । अर्जुनस्तस्यामेव रजन्यां तां पाणीकृत्य रथचालनचतुरया तया सह द्वारकातः प्रतस्थे । बलरामस्यानुपस्थिततया यादवास्तं रोद्धुमपि नापारयन्त । इदं सुभद्राहरणवृत्तान्त-माकर्ण्य यद्यपि यादवाः पार्थमुद्दिश्य रणायोद्योगं प्रारेभिरे तथापि श्रीकृष्णस्तेषामुद्योगं शिथिलयामास । तस्य सुभद्राविवाहस्याभीष्टत्वात् । ततः पुण्ये मुहूर्ते कुरुवंश्यानां कुशलोदयाय वीरपत्नी सुभद्राऽभिमन्युनामानं पुत्र-मजीजनत् । इतस्तु पाञ्चाली द्रौपद्यपि एकैकस्य पत्युरेकैकं पुत्रं जनयित्वा पश्चापि पाण्डवान् पितृणामृणान्मुक्तान-करोत् । अथ तेषां तादृशं पुत्रोत्सवमाकर्ण्य सोष्मा ग्रीष्म-ऋतुर्वसन्तसामन्तो राजन्यसम्बन्धितया हर्षादिव समाजगाम । तदानीं भगवान् पवमानस्तु भीमस्य पुत्रो-त्पत्तिनिमित्ताशौचवत्तया लोकस्पर्शाय संकुचन्निव

५- संक्रन्दनः इन्द्रः तस्य नन्दनः पुत्रः ।

कतिचिद् दिनानि मलयं विहाय पदमेकमपि न चचाल। एवं पचेलिमां हेलि[6]मयूखकेलिं सूर्यतनयायै यमुनायै निवेदयितुकामाभिरिव रामाभि[7]र्निरन्तरोपान्तौ तद्दृग्ध्वनि वसन्तौ वसन्तरतिकान्ता[8]विव कृष्ण[9]कौन्तेयौ वनजात[10]सनाथे पाथसि[11] रोधसि[12] च विहारैस्तेषां दिनानामौपयिकमातिथ्यमापादयितुं तामेव भगवतीं यमुनासरितमापतताम्। तत्र सुचिरं विहृत्य वधूटीभिः सह तटाटवीं पर्यटतोस्तयोरग्रे लघूकृतसूर्यकिरणप्रकाशः कोपि महसां राशिराविरासीत्। कम्पमानवदनं तं वृद्धं तेजस्विनं पुरुषमायान्तं विलोक्य मुकुन्दवध्वो मार्गादपसृतवत्यः। कृष्णार्जुनौ चात्मनः पापमपनोदयितुं तच्चरणयोः साष्टाङ्गं प्रणेमतुः। वृद्धब्राह्मणवेषोऽसावग्निस्तयोः समीपं जगाम। आशिषामनुपदमित्थं चोवाच– अहं खाण्डवनरूपमशनं यावत्तृप्ति भक्षयितुं याचे। तत्र युवां मम साहायकं कुरुतम् इति। तौ तथा भोजनमर्थयमानस्याग्नेर्वचनं त्वरया स्वीचक्रतुः। असाधारणैरेवोपकरणैस्तादृशस्य महतः कार्यस्य सम्पाद्यतया गाण्डीवाख्यं धनुस्तूणीरद्वयं, शुभ्रांश्चतुरोऽश्वान्, हनुमता ध्वजस्थितेन सनाथं रथं चाग्निरर्जुनाय प्रददौ। स च तानि साधनानि

---

६-हेलिः सूर्यः। ७-स्त्रीभिः। ८- रतिकान्तः कामः। ९- कृष्णार्जुनौ। १०- वनजातं कमलम्। ११- जले १२- तीरे।

श्रीकृष्णानुमत्या जग्राह । अर्जुनेन धनुषि टङ्कारिते सत्येवाग्निस्तत् खाण्डवं वनमखण्डशो दग्धुं स्वपाण्डित्यममण्डयत् । क्रमेण प्रबलीभवतो भगवतो मरुत्सखस्य[1] प्लोषचटचटत्कारैः परितः परीतं तद्वनं समजायत । खाण्डवे समस्तवस्तूनि दहता वह्निना यावत् सर्पा दग्धुं प्रवृत्तास्तावदिन्द्रः स्वप्रियस्य तक्षकनागस्य रक्षार्थं देवसेनां युद्धायोद्योजयन् मेघैरम्बरतलमाच्छादयत् । ततस्तैरनेकैर्नाकौकसाम[2]नीकैः पर्जन्यानामासारैः[3]सर्वाभिसारेण निर्वापिते वनाग्नौ मनाक् श्यामायमाने सति शोणायमानलोचनेन कपिध्वजेन तत्प्रतिचिकीर्षया शरकदम्बैरम्बरे निरवलम्बमाकलितां शालां छत्रीकृत्य समुन्नीयमाननिजकेतुरुषर्बुधो[4] भगवान् उद्दिदीपे । तदा प्रोषितपतिका तक्षकस्त्री प्राणरक्षार्थं कतिभिर्नागकन्याभिः सह तस्माद् वनादुत्पपात । उत्पतन्तीं तां तक्षकवधूमर्जुनो निशिताग्रेण स्वशरेण जिह्वायां शिरसि च द्विधाच्छिनत् । अथ कुपितः कौशिकोपि[5] स्वयं चकितचकितं वियति विहितोपसरणां नवजननीशोकदयनीयं हृतवालं[6] तमहिबालमश्वसेननामानं परिगृह्य लालनया परितोषमनैषीत् ।

---

१-वह्नेः । २-देवानाम् । ३-आसारो धारासम्पातः । ४-वह्निः । ५= इन्द्रः । ६= हृतकेशम् ।

देवसेनयाऽर्जुनसमीपमागत्य चोत्कटं युद्धमारब्धवान्। किन्तु कर्णपर्यन्तमाकृष्य त्यज्यमानानर्जुनबाणान् सोढुमपारयन् भीत्या पलायनमेवायनं चक्रे। युद्धादिन्द्रे पलायिते जयलाभात् कृष्णार्जुनौ स्वं स्वं शङ्खं प्रदध्मतुः। वह्निना सकलं खाण्डवं वनं दहतापि तक्षको नागराजः कुरुक्षेत्रगतत्वेन मयनामा दानवश्चार्जुनशरणगतत्वेन न दग्धौ। ततः खाण्डवे दग्धे तृप्ततयाऽऽनन्दातिरेकान्मन्दगतिर्वह्निर्गमनानुज्ञामर्थयित्वा स्वर्यातः। एतावता कालेन परिसमाप्तवार्षिकतीर्थप्रवासोऽर्जुनोपि कृष्णेन सह युधिष्ठिरमाजगाम। तत्र ते सर्वे सङ्गता भृशमाननन्दुः। कतिचिद् दिनानि तत्र स्थित्वा कृष्णः स्वां नगरीं द्वारकामगात्। इतोऽर्जुनेन रक्षितो मयो नाम दानवः शिल्पी राज्ञे युधिष्ठिराय विविधमणिभूषितमभ्रंलिह-प्रासादरुचिरमद्भुतशिल्पकलाकलापकलितं ललितं सभाभवनं रचयांबभूव। यत् स्वकीयलावण्यातिशयेन देवसभाभवनमप्यभिभवदुदलासीत्। निर्वृत्ते तस्मिन् एकदा नारदो युधिष्ठिरमासाद्य तं राजसूययज्ञं कर्तुमन्वरुधत्। युधिष्ठिरस्तच्छ्रुत्वा स्वप्रियसुहृदः श्रीकृष्णस्यापि तद्विषये सम्मतिमवगन्तुं दूतमुखेन तमाकारयत्। ततो दूताहूतः पुरुहूतानुजः श्रीकृष्णो निरन्तरायमेव राजसूयाख्यं महान्तं

सप्ततन्तुं कर्तुं कामस्य कौन्तेयस्योपान्ते रहसि मन्त्रयमाण-स्तादृशाद् मूर्धाभिषिक्ताद् यज्ञारम्भात् प्राग् दुर्वृत्त-जरासन्धभूपवधमत्यावश्यकमादिक्षत् । युधिष्ठिरेणा-नुमतश्च भीमार्जुनाभ्यां सह जरा[1]घटितदेहमपि देदीप्य-मानबलसम्पन्नम्, आशा[2]जेतारमपि परार्थापहारजागरि-तारम्, मागधमपि[3] विगीतव्यापारं[3] द्वैमातुरं[4] महारथं जरासन्धमुपेत्य तं युद्धायाजुहुवे। तदानीमात्मनः सम्मुखीनं दृढ़तरपरिकरबन्धं जरासन्धं गन्धवहनन्दनो भीमः पञ्चदश दिनानि नियुध्य तेषां तृतीयभागेन पञ्चत्वपदाभिधेयेन योजयामास। जरासन्धं मारयित्वा ते त्रयोपि कृष्ण-भीमार्जुना इन्द्रप्रस्थमुपाययुः। ततः कृष्णो युधिष्ठिरेण सङ्गत्यावश्यकं च संलप्य पुनर्द्वारकां प्रययौ। इतो राजसूययज्ञसिद्ध्यर्थं पाण्डवैश्चतुरैश्चतुर्दिग्विजयारम्भो विहितः। उत्तरान् कुरून् विजित्यार्जुनेनाकुप्यं[5] वसु भूरि

---

१- जरया वार्धक्येन, जरानाम्न्या राक्षस्या च घटितो देहो यस्य सः तम्। २- आशानां दिशाम्, अभिलाषाणां च जेतारम्। ३- मगधदेशोद्भवं, गानविद्याकुशलं कुशीलवं च। गीतव्यापार-रहितं निन्द्यव्यवहारं च। यो मागधः स कथं गीतव्यापाररहितो भवतीति विरोधः, निन्द्यव्यवहारपरत्वेन तत्परिहारः। एवमुक्तयोः पूर्वयोः पदयोरपि विरोधः परिहरणीयः। ४- द्वयोर्मात्रोरपत्यम्। ५- सुवर्णरजतात्मकम्। सुवर्णरजतभिन्नं ताम्रादि घनं कुप्यं भवति, तद्भिन्नमकुप्यम्।

समानीतम् । इयान् भूयानर्थराशिरर्जितो यद् दिक्षु जितासु युद्धं व्यरमत् परं धनागमो न व्यरमत् । वसुन्धरेत्यन्वर्था संज्ञा तदानीं केवलमिन्द्रप्रस्थस्यैवावर्तत । अन्यासां तु भुवां सा रूढिरेव जज्ञे । जरासन्धवधानन्तरं द्वारकां गतो भगवान् पश्चिमाशां जित्वा बहूनि धनानि सहानयता विजयवाद्येनाकाशं च पूरयता नकुलेनैव सह पुनर्युधिष्ठिरसमीपमुपागात् । हरिणा साक्षादुपस्थितेनादिष्टो युधिष्ठिरो याज्ञिककर्मानुष्ठानक्रमज्ञानवतां पुरोधसां समूहैः सह राजसूयं यागं प्रक्रान्तवान् । उत्तमे प्राग्वंशे[1] तिष्ठन्नप्यसौ पुनः प्राग्वंश[2]माविशत् । तत्र नानाजनपदमेदिनीवल्लभमल्लमुकुटमणिकिरणपल्लविते यज्ञवाटे भीष्मयुधिष्ठिराभ्यां नियुक्तो वीतिहोत्रेणेव ज्वलता हेमपात्रेण परिष्क्रियमाणपाणितलः सहदेवो महर्षिजन[3]वलयमध्यमहेन्द्रनीलरत्नं चिरत्नं पुरुषं भगवन्तं श्रीकृष्णं समासाद्य प्रथममर्घ्येण परिपूजयांचक्रे । कृष्णस्याग्रपूजां विलोक्य तत्रस्थस्य राज्ञः शिशुपालस्य मनः कोपेन जज्वाल । मन्ये वेदिगतो वह्निरेव स्वस्थानं विहाय तद्हृदयं प्रविष्ट इति । क्रोधारुणनयनः स कृष्णं प्रति विषमं विषमुल्वणं

---

१- प्राचीने प्रसिद्ध वंशे २- यज्ञशालाया बहिर्मण्डपदेशम् । ३- महर्षिजना एव वलयं कटकं तन्मध्ये महेन्द्रनीलमणेः श्यामलं रत्नम् ।

वसन्ति कियन्त्यसन्ति सन्ति वा कटुवाक्यान्युज्जगार। परं तानि शृण्वतो भगवतो मनसि विकारलेशोऽपि नाजायत। अन्ततो गत्वा भगवतश्चक्रं शिशुपालकण्ठेऽश्लीलवचनराशिरवशिष्यतेऽथवा परिसमाप्तिमाप्त इति वीक्षितुमिव तत्कण्ठमकुण्ठोत्कण्ठयाभिनत्। एवं तस्य दुर्मतेरायुषा सह समापिते सवनकर्मणि द्विगुणं वित्तानि ग्राहितान् सर्वानुर्वीपतीन् प्रस्थापितवन्तं युधिष्ठिरं सम्यगनुज्ञाप्य भगवान् कृष्णः स्वपुरीं द्वारकां प्रयातः। इतो राजसूययज्ञात् परावृत्तो हस्तिनापुरं गतो दुर्योधनो धर्मराजविभवावलोकनेन जातमत्सरः कुटिलं शकुनिं प्रत्येवमुवाच–हे मातुल शकुने ! मया युधिष्ठिरयज्ञे निखिलक्षत्रियोपनीतो भूयिष्ठो हेमराशिरक्षिलक्षीकृतः। सास्मर्यमाणः स इदानीं मे नक्तंदिवं चित्तं दहति। यच्च सभायां मणिभुवि स्खलितं मां विलोक्य द्रौपदी वल्गत्कुचमुच्चैरहसीत् तत्तदीयं हसितमुचितमजायतेति वक्तुमिव द्रौपदीं नाम स्वां स्नुषामुपेतुमयं मम प्राणवायुर्निर्गन्तुमिच्छति। भीमस्य वायुपुत्रत्वाद् वायुना स्वस्नुषायाः साहाय्यकरणस्यौचित्यात्। अधुना युधि सैन्येव युधिष्ठिरादीनां पञ्चानामपि पाण्डवानां निधनं विधाय तदपमानजनितां शुचं निग्रहीतुमिच्छामि। इति निगद्य व्रीडाव्यथानद्योः सङ्गमे

लिमग्नमेनमभग्नकैतवबन्धुर्गान्धारपतिरुत्तारयितुमेवमुत्तर-मदत्त— हे वत्स दुर्योधन ! यस्य युद्धे इन्द्रादयो देवा अपि पलायिषत तमर्जुनं त्वं कथं जेष्यसि । यस्य भीमस्याहवे बकासुरहिडिम्बजरासन्धा वीरा एकमुष्टिप्रहा-रमपि सोढुं नापारयन् तज्जयस्य नितान्तमसंभाव्यत्वम् इति विभाव्य त्वं विरम युद्धव्यापारात् । तैः सह युद्धेन खेदविनोदनमशक्यसंपादनं विद्धि । अहं त्वेवं मन्ये– तव च तेषां च परस्परं विभवे परिपणन[1]पदाधिरोहिणि सत्यसामान्येन द्यूतकपटपाटवेन झटिति तान् पराजय-घण्टापथे सञ्चारयितुमलमस्मीति । वित्ते हृते दरिद्रास्ते स्वयमेव बन्धुभिर्विसृष्टाः सन्तो विनाशं यास्यन्ति, लज्जया विदेशं वा प्रयास्यन्ति । ततस्त्वमसपत्नां प्रशाधि वसुधाम् इति ।

एवं दुर्योधनशकुनिभ्यां स्थिरीकृते कपटद्यूतप्रयोगे तयोर्विचारमनुमोदयता धृतराष्ट्रेण मणिमयनवसभाभवन-प्रवेशोत्सवव्याजात् समाहूतो युधिष्ठिरः सानुजः समागत्य दुर्योधनादिभिः सत्क्रियमाणो धृतराष्ट्रस्य चरणयोर्द्वादशधा प्रणनाम । मन्ये द्वादश वर्षाणि वने व्यतियाप्यानि भविष्यन्तीत्येकस्य वर्षस्य सुयाप्यत्वायैकप्रणामजं पुण्यं कल्पेतेति । यावद् युधिष्ठिरो धृतराष्ट्रं प्रणमति तावद्

---

१- क्रयविक्रयस्थानमापन्ने ।

द्रौपद्यपि गान्धारीं प्रणतवती । धृतराष्ट्रः पूर्वं कुशलं पृष्ट्वा तदनन्तरं राजसूययज्ञानुष्ठानं च प्रशस्य युधिष्ठिरादीन् विश्रामगृहं प्रेषितवान् । प्रातःकाले युधिष्ठिरादयोऽहर्मुखोचितं कर्म निर्माय द्यूतविद्याकुशलैः पौरैर्भूपैश्च भासुरां सभां प्राविशन् । तत्र चित्रीयमाणेष्वनल्पसभाशिल्पेषु दृशं परिकल्पयतः प्रज्ञादृशं धृतराष्ट्रं निकषा तमसोवेन्द्रनीलमणिनिर्मितासने निषीदतोऽस्य युधिष्ठिरस्याभिमुखं निविशमानः शकुनिः स्थानाद् भ्रंशयितुं साक्षात् कृतसंनिधिश्च्युतमध्यमवर्णया तदीयाभिख्यया वाच्यः शनिरिव शनैः प्रासङ्गिकेन पथा दुरोदरविहारेऽवतारमभिरोचयामास । यद्यपि युधिष्ठिरः कर्त्तव्यविदासीत् तथापि भाग्यवशान्मूढो भूत्वा तस्यां सभायां द्यूतं कर्तुं प्रावर्तत । अथ च स्वीयान् नानादेशान् पणीचकार । तदा कैतवपटुः शकुनिरक्षशौण्डस्तं जितवान् । न किमपीतोऽधिकमद्भुतं यच्छकुनिरेकेनाक्षेण[१] युधिष्ठिरपणीकृतान् सर्वान् विषयान[२]जैषीत् । अयौगपद्याज्ज्ञानानां प्रतिनियतविषयग्राहकत्वाच्चेन्द्रियाणामेकेनेन्द्रियेण तुल्यकालं सर्वेषां शब्दस्पर्शादिविषयाणामवगाहनस्य सुतरामाश्चर्यजनकत्वम् । क्रमशो

---

१- पाशेन, इन्द्रियेण च । २- देशान् इन्द्रियविषयान् शब्दादींश्च ।

युधिष्ठिरेण पणीकृतान् अलंकारान् बहून् मणीन् स्वर्णराशीन् द्रौपद्या भार्यया सह सहजान् भ्रातृन् भीमादींश्च जित्वा शकुनिः सानन्दं जगर्ज । तत्रान्तरे बहुपतिवधूटीयं द्रुपदात्मजा वराकीदानीमस्माकं घटीचेटी समजनीत्यत्र परिषदि तामानयेति दुर्योधनवचनमनुसरन् दुःशासनः साक्षाद् यम इव वेगादुत्थाय द्रौपदीं सभायामानेतुं प्रचलितः । तस्याश्च भिया सदसि धावनमाचरन्त्याः कैश्ये[1] स कराङ्गुलिं चकार । तत्र स दुर्मेधाः केशग्राहं गृहीतायाश्चिकुरभारात् कालिमधारामिव कुवलयगर्भमाल्यरसझरीमश्रुभिः सह वर्षन्त्यास्तस्याः पातिव्रत्यलक्ष्मीनिवासस्फटिकप्राकारमिव दुकूलमप्याहर्तुं प्रावृतत् । तादृशे परिभवे समुपस्थिते सर्वेषु तत्रत्येषु भीष्मादिषु सभ्येष्वपि रक्षाविमुखेषु सत्सु भगवन्तमेव त्रातारमवधार्य सा तमेवाहूय रक्षां प्रार्थितवती । वस्त्रं चिरमपकर्षन्नपि दुष्टो दुःशासनो भगवत्कृपया वर्धितानेकवाससो द्रौपद्या नग्नतां कर्तुं नाक्षमत । परं श्रमाद् भूमौ पतन् लोकानामेव दन्तान् नग्नानकृत । असौ लोकानामुपहासविषयो जातः । अथ तथाभूतपरुषयोषाभिषङ्ग[2]रोषकलुषेण पृषदश्वजनुषा[3] भीमेन परिषदि भीषणमेवं बभाषे— अह-



१- केशसमूहे । २- अभिषङ्गः पराभवः । ३- वायुपुत्रेण ।

मधुना यथा द्रौपद्या वक्षसि प्रसृमरमश्रु स्वदृष्ट्या पश्यासि तथैव दुःशासनं व्यापाद्य तदीयहृदयं विदार्य च ततो निर्यदुष्णं शोणितं पास्यामीति। किं च सरसीव चलत्कबन्ध[1]बन्धुरे समराजिरे नचिरात् तामर[2]सच्छदानिव शतमपि विमतानेतान् दुर्योधनादीन् हेमन्त इवाहं धार्तराष्ट्र[3]शब्दशेषां महागदापत्तिं[4] गमयिष्यामीति। तत्रैव सुत्राम्णः पुत्रेणार्जुनेनापि कर्णवधः प्रतिजज्ञे। सहदेवेन च शकुनिवधः। इति तेषां तादृशेन वीरवादेन, अयि द्रौपदि ! त्वमिह मम जङ्घायां सुखमास्स्वेति दुर्योधनेन करास्फालनपूर्वकं दर्शिते सक्थनि[5] एतस्यैवाङ्गस्य भङ्गेन तव मरणं भावीति द्रौपद्याः शापेन च भीतिपराभूताभ्यां धृतराष्ट्रगान्धारीभ्यामन्धदम्पतिभ्यां यथापुरं[6] राज्यं प्रत्यर्प्य हरिप्रस्थं प्रति प्रस्थापितो युधिष्ठिरः पुनरपि कृतमन्त्रैरमित्रैराहूतमात्रोऽर्धपथाद् विधिना गलहस्तिकया विनिवर्तित इव तामेव सभां प्रत्यावर्तत। बोधवतां वरोप्यसौ धर्मतनयो भूताविष्ट इवाभिष्टमनार्यजुष्टं देवन[7]विहारं पुनरप्यङ्गीचकार। यत्र देवनविहारे 'दे'

---

१- कबन्धं जलम्, अपमूर्धकलेवरं च। २- तामरसं कमलं, तस्य छदान् पत्राणीव। ३- धृतराष्ट्रस्य पुत्राः धार्तराष्ट्राः हंसविशेषाश्च। ४- गदो रोगः तस्यापत्तिम्। गदायाः सकाशादापत्तिं च। ५- जङ्घायाम्। ६- यथापूर्वम्। ७- द्यूतक्रीडाम्।

इत्याद्यमक्षरं विजहद् वनविहार एव द्वादश वर्षाणि यावत् पणोऽभूत् । विजयेन[1] सदा पुरस्कृतोऽपि युधिष्ठिरस्तदानीं पृष्ठतः कृतः । अथ पराजयानन्तरं सत्यसन्धः स प्रत्यर्थिवशंगतायां धरणौ क्षणमपि स्थातुं नोचितमिति मत्वा तत उत्थायात्यर्थमुत्तप्यमानां मातरं कुन्तीं स्वपितृव्यस्य विदुरस्य पाणौ निधाय सस्त्रीकः स्वभ्रातृभिः सह पादचरेण वनं चचार । क्रमेण ते सजानयो[2] विलङ्घ्य विविधानि विपिनानि भागीरथीं पुरस्कृत्य तत्र तां निशीथिनीं पश्चाच्चक्रुः । अपरेद्युरतिमात्रबुभुक्षितानुयात्रिकसत्त्रिजनपरित्राणाय पवित्रैः स्तोत्रैः प्रसेदुषा चित्रभानुना सूर्येण दत्तमक्षय्यमन्नपात्रमादाय ते स्वकलत्रे द्रौपद्यां निदधुः । ततः काम्यकवनमेत्य तेषु वसत्सु भीमो नियोद्धुकामं किर्मीरं नामोग्रं कुणपाशनं[3] क्षिप्रं निष्प्राणतामनैषीत् । काम्यकवनान्निर्गत्य वर्त्मकृतं श्रममविगणय्य ते द्वैतवनमायाताः । तत्र व्यासदेवस्य चरणयोः प्रणताः । यथा शुक्रे स्वातिनक्षत्रमायातेऽतिवृष्टिर्भवति तथा व्यासे समागते सति पाण्डवानां नेत्रयोरतिवृष्टिः प्रववृते । ते व्यासं दृष्ट्वातिमात्रं रुरुदुः । व्यासदेवेन तु विपदि धैर्यमा-

---

१- अर्जुनेन चेति ध्वन्यते । २- जायासहिताः । ३- कुणपाशनः राक्षसः ।

लम्बनीयम् इत्याद्याश्वासनेनाश्वासिताः शुचं निरास्थन् । ततो व्यासेनोपदिश्यमानप्रतिश्रुतिमन्त्रोऽर्जुनो युधिष्ठिरेणानुज्ञातः पाशुपतास्त्रलब्धये शिवमाराधयितुं हिमालयं गतः । तत्र तदीयं पुण्यं तपोवनं दृष्ट्वा तत् प्रणनाम । महादेवचरणयोश्चित्तं समादधद् दुश्चरं तपस्तप्तुं चारभत । सूर्यनिविष्टदृष्टिः समन्ततः स्थापितवह्निश्च स पञ्चाग्निव्रतमाचरत् । फलपर्णजलानिलाशनानि क्रमशो विहाय तपस्यतोऽस्येन्द्रियगणो विषयेषु लोलुपतां न प्रपेदे । उन्नतं तपःफलं प्रेप्सुरसावुपरिकृतहस्तः पादाग्रमात्रस्पृष्टभूतलश्च शिवं द्रुतं दयाद्रुतं कर्तुं प्रारभत । तस्य काम्यमानं फलं दित्सन्नपि शिवो लुब्धकतामयासीत् । लुब्धकाः किराता यथा गजमदकृततिलका मयूरपिच्छचूडा वृक्षपत्रवल्कलवस्त्राश्च धनुरादाय विचरन्ति तथा पार्वतीपरमेश्वरावपि निजगणसहितौ मायाकिरातौ भूत्वा व्यरुचताम् । वरः शिवः स्वभूषणभूतशशिखण्डस्याद्याक्षरयोगेन शवरः संजातः । शशिखण्डश्च शकारेण वियुक्तः शिखण्डः सन् शवरभावे भूषणतां गतः । तदानीमेव तौ जगदादिमौ दम्पती सनियममुपासीनस्य शुनासीरसुतस्यार्जुनस्य तपोवनसीमानं शनैः शनै-

१· कदर्यताम्, किराततां च । २· शुनासीर इन्द्रः

रासीदताम् । तत्रार्जुनं दृष्ट्वा भवान्याः कुमारगणेशविषय-
कतया द्विधा स्थिता प्रीतिस्त्रिधा समजायत । सा ह्यर्जुनं
सुतस्नेहेनानुगृहीतवती । अत्रान्तरे खुरघातैर्भुवं दलयन्
घोणया घोरं घुर्घुरशब्दं कुर्वन् कोपि कोपी वनविहारी
वराहः कौपीनवतोऽर्जुनस्य तपस्याश्रममध्यमुपागतवान् ।
तं वीक्ष्य विरमिततपस्यः सन्नर्जुनो धनुरादत्त । यदैवासौ
प्रहर्तुमाकृष्टचापो वराहमुपगतस्तदैव तदभिमुखमनुधावन्
कश्चन सानुचरः शबरोऽप्यायातः । स च किरातवेषः
शिव एवासीत् किं त्वर्जुनस्तं न पर्यचिनोत् । मदनुद्रुते-
ऽस्मिन् वराहे त्वं बाणं मा मुञ्चेति किरातवचोऽनाक-
र्णितकेनानादृत्यार्जुनस्तत्र बाणं मुक्तवान् । यथा
सोदरौ भ्रातरौ पैतृकं धनं समं विभज्य भुञ्जाते तथैव
शिवेनार्जुनेन प्रयुक्तौ बाणौ वराहस्यायुः समं विभज्य
भुक्तवन्तौ । ततः कुपितोपि कुरुवीरस्तपःशान्ततया
नातिपरुषमेवमुवाच— भोः शबर ! मदावासदेशागतत्वेन
मयैव प्राग् लक्ष्यीकृतत्वेन चोत्पन्नमत्स्वत्वेऽत्र वराहे यत्
त्वं प्रहृतवानसि तमिमं तवापराधं दण्डयितुं प्रभवति
मम शापश्चापश्च । तथापि मया तपसा सोढं तवागः[1] ।
इति तस्यान्तर्वाणेर्मुनेरन्तर्वाणीमाकर्ण्य शिवोपि

---

१. आगः अपराधः । २. अन्तर्वाणिः विपश्चित् ।

सस्मितं प्रत्यभाणीत्— हे मुने ! मृगयया वनजन्तुवधो यः स्वधर्मतया बुधैरुक्तः स किं किरातस्य धर्मं उत मुनेरिति कथय । अहं किरातस्त्वं च मुनिः । तत् स्वकुलाचाराद-प्रमाद्यते मह्यमयुक्तकारिणापि त्वया कियद् दूरं प्रकाश्यते तपसीव बाहावप्याहोपुरुषिका[1] । यदि मया बाणो न प्रयुक्तः स्यात् तदा त्वदीयेन बाणेन केवलेनासौ वराहो नैव व्यापादितः स्यात् । ईषदरुणनेत्रस्य मम मृत्योरपि भयजनकत्वे लोकदृष्टे तव वृथा विकत्थना[2] नोचिता । इति शवरस्याहंकारवादेन मातङ्गः पाण्डुकुलशशाङ्कोऽर्जुनः पुनरपि कामपि गिरमेवमङ्कुरयामास—हे शवर-कुलकलङ्क ! त्वदीयं कठोरमीदृशं वचनं नान्यस्मै फलाय कल्पते । केवलं तव मरणं मया सम्पाद्यमानमुपपाद्य वैधव्यदानद्वारा तव स्त्रियाः कपोलस्थलं निस्ताटङ्क[3] सम्पादयेत् । अनेन भाषणेन त्वं मम वध्यतां भजसे । अर्जुनस्य तथा कर्कशं वचो निशम्य तद्वधेच्छया निषङ्गतः[4] शरार्धमुद्धृत्यापि गणाः पार्वत्याः स्मयमानकपोलं मुखं वीक्ष्य तदीये मनसि रोषाभावं ज्ञात्वा हन्तव्योऽयं न वेति तदाज्ञां प्रतीक्षमाणा इव स्थिताः । अथ शिवार्जुनौ

---

१- अहो अहं पुरुषः इति तस्य भावः आहोपुरुषिका । अहङ्कार इत्यर्थः । २- प्रशंसा । ३- कर्णाभूषणरहितम् । ४- तूणीरात् ।

भल्लबाणान् दिवि वितत्य वेगेन युयुधाते। महादेवे धनुषा सह शरमामृशति सति भीता पार्वत्यपि पार्थस्य मङ्गलाय 'या त इषुः शिवतमा शिवं बभूव ते धनुः' इति मङ्गलजनकं मन्त्रमावर्तयितुमारेभे। यद्यपि शिवो धनुराचकर्ष तथाप्यर्जुने दयां कृत्वा युद्धस्याभिनयमिव चकार न तु वस्तुतः प्रजहार। अर्जुनेन प्रेरिता बाणाः शिवं प्रति गता नालक्ष्यन्त। यदा तस्य सर्वे बाणाः समाप्तिमापुस्तदा बाणाभावात् प्रहर्तुमशक्त्यातिकुपितोऽसौ शिवस्य शिरसि प्रजिहीर्षया धरणिं पादाङ्गुष्ठमात्रेण स्पृशन् सन् पार्वत्यां पश्यन्त्यामेव मस्तके चापेन प्रहृतवान् येन प्रहारेण चन्द्रशकलमिव क्षतमजायत। अर्जुनचापाहतात् महादेवमस्तकात् तच्छिरोभूषणपन्नगानां मणयो न्यपप्तन्। स गाण्डीवदण्डोपि खाण्डवे तक्षकवधूवधसाधनतया चिरमयमस्मत्कुलविरोधीति क्रोधनैः शिवजटावनकुटुम्बिभिः कुण्डलिभिर्भक्षित इव तत्क्षणं नालक्ष्यत। ततोऽयं दैवविपर्ययः किम्? उतामुष्य माया किम्? इति चिन्तापरतन्त्रेणापि धैर्यदत्तहस्तोत्साहेन तिष्ठ तिष्ठ जडात्मन्! एवमर्जुनं निर्जित्य यशोर्जितुमिच्छसीति कृततर्जनेनार्जुनेन शिवं प्रति नियोद्धुमारेभे। तेन शिवस्य वामोरसि दृढो

मुष्टिप्रहार: कृत: । हरोपि शिथिलया मुष्टयार्जुनस्य वक्षसि प्रहृतवान् । इति परस्परमुष्टिप्रहारवृष्टिपरिमुष्टवनकुसुमपरागभस्माङ्गरागौ सरभसमेकेन बाहुना जटासु गृहीत्वा परेण बाहुना वलयितगलनालौ तौ शवरतपोधनौ यदा महत्यामधित्यकायामापततां तदा दर्वीकर[1]विभुकन्धराखर्वीकरणपटुभारोऽसावुर्वीधरपतिरासीत् । शिवेनावाङ्मुखीकृत्य पातितं तेन समुज्झितं मूर्च्छितं चार्जुनं दृष्ट्वा लोका मेनिरे यदयमर्जुनो हिमवन्तमनुरुणद्धि महादेवमाख्याहि ममेमां मरणकल्पां दशामिति । युद्धेऽर्जुनबाहुबलमवलोक्य चकित: शिव: शिरश्चालनेन पार्थस्य वीर्यं धैर्यं च भूय: श्लाघितवान् । अथ कियतश्चित् कालावधेरूर्ध्वं पुनरागतचेतनास्वागताचारोऽर्जुन: शनैरुत्थाय पुर: समुपस्थित दन्तपटगर्भवर्तिना स्मितेन सूचितहृदयप्रसादं भगवन्तं महादेवमुद्वीक्ष्य प्रमोदाश्रुपूरैर्नदीमातृ[2]कायमाणपुलकाङ्कुर: सविनयमुपसृत्य पादारविन्दयो: सहस्रकृत्व: प्राणंसीत् । स्वामिन् ! मया जडधिया देवदेवे

---

१- दर्वीकरा: सर्पा: तेषां विभु: शेषनाग: तस्य खर्वीकरणे वामनीकरणे पटु: समर्थो भारो यस्य स: । उर्वीधरपति: हिमालय: ।

२- नद्यम्बुपालितो देशो नदीमातृक: । तद्वदाचरन् पुलकाङ्कुरो यस्य स: । सातिशयं प्रवृद्धपुलक इत्यर्थ: ।

त्वयि वाचा शरेण धनुषा दृढमुष्टिना[1] च यच्चतुर्विधमागो रणेऽकारि तदद्य करुणार्णवेन भवता क्षन्तव्यमिति । एवं विज्ञापयन्तमेनं पारिजात–पल्लव–तल्लजप्रतिमल्लस्य पाणि-तलस्य परामर्शनेन प्रमुषितव्रणवेदनाङ्गं प्लवङ्गकेतन[2]-मनङ्गशासनोऽप्येवमवादीत्— हे प्रवीर ! शूराणां शौर्यादन्यन्नाभिमतमिति तव चापताडनकृतशौर्यप्रदर्शनेन यावती मम तुष्टिर्जाता न तावती पूजाभिः । इति सुधा-माधुरीधुरीणं वचनमभिधाय तत्क्षणमेव शिवोऽर्जुनस्य गुप्तं गाण्डीवाख्यं धनुर्लुप्तान् प्रयुक्तपूर्वान् बाणांश्च प्रत्या-वर्त्य स्वं पाशुपतास्त्रमपि समर्पितवान् । ततश्च विस्मयनीय-प्रभावः स भूतभावनो भगवान् अन्तरधात् ।

पाशुपतास्त्रप्राप्त्यनन्तरमिन्द्रेण स्वर्गमागन्तुमाज्ञप्तो-ऽर्जुनो रथमारुह्य स्वर्गं चलितः । तत्र गत्वा स्वनामो-पादानपूर्वकं पितरमिन्द्रं पादयोः प्रणनाम । इन्द्रः कृतदि-व्यास्त्रलाभतयादरेण तं स्वासनार्धे समुपवेशितवान् । निशितशरक्षतवपुषं च तमप्सरसः कटाक्षैरक्षीणमक्षिण्वन् । सभायामुपविष्टः पित्रादिष्टः शिष्टो जयन्त इष्टं वैजयन्तं नाम प्रासादमुपगमयितुमेनमैरावते नाम गजे समुपवेश्य

---

१· दृढमुष्टिः कृपणः तेन । पक्षे दृढेन मुष्टिना मुष्टिप्रहारेण ।
२· प्लवङ्गकेतनः कपिध्वजोऽर्जुनः । ३- अनङ्गशासनः शिवः ।

वाद्यमानवीणादिवाद्यं वैजयन्तं नाम प्रासादमापयत्। तत्रार्जुनं दृष्ट्वा शची शुचिः कृताशीर्वचनरचना सती तन्मस्तके पारिजातकुसुमधूलिभिरेव तिलकं चकार। धराधूल्यास्तत्रासंभवात्। स्वर्गं गतोऽर्जुनः स्वपितुरिन्द्रादस्त्रविद्यां चित्रसेनाच्च गायनाद् गानविद्यामभ्यस्यति स्म। कदाचिदुर्वशी नामाप्सरा रहस्यनाहूतैवार्जुनमुपेत्य तेन सह संभोगं प्रार्थितवती। तन्निराकरणाद् भग्नकामा च सती कोपात् त्वं क्लीबत्वमेहीति तं शशाप। विदितशापवृत्तान्त इन्द्रोऽर्जुनमित्थमाख्यत्—गुप्तवाससमये विराटस्यान्तःपुरे त्वया विराटपुत्री गानं शिक्षणीया। तत्रावसरे समुपयुक्ततया तवायं शापो न खेदावहः। तावत्समयमात्रवृत्तिश्चायं शापस्ते भवितेति। अथ कदाचिदस्त्रशिक्षासमाप्तौ गुरुदक्षिणात्वेन विपक्षकुलक्षपणं भिक्षमाणेन सहस्राक्षेण स्वमस्तकादाक्षिप्य निक्षिप्तकिरीटोऽर्जुनो मातलिपरिकल्पितसारथ्येन नन्दनवनमन्दपवनसन्दीमानकेतनस्पन्दनेन स्यन्दनेन निर्गत्य विलङ्घितदूरवियत्पथः पाथोनिधौ रक्षःकुलकोलाहलनीचीकृतवीचीरवं पातालगुहाद्वारं निरुध्य रणप्रस्तावं वितस्तार। तावदनाकर्णितपूर्वगाण्डीवविस्फारश्रवणादहंपूर्विकया युगपदभिषेणयतोऽचिन्तितमृत्यून् क्षिप्रं क्षुरप्रैर्विश्राणितविवरादरः

कृतप्रयाणैः प्राणैर्निवात[1]कवचानपि प्रवात[2]कवचानेव विरचय्य रोषात् कलहायमानान् कालकेयानपि कालगेहातिथीन् पाशुपतेन मन्त्रपूर्वकं निमन्त्रयांचक्रे। तान् दैत्यान् हत्वा दिवि तेन वितेने नक्षत्रोज्ज्वलमचलं विमलं कीर्तिवितानम्। दैत्यवधानन्तरं सकुशलं तं परावर्तमानमवेक्ष्य देवैः सहेन्द्रो नितान्तं प्रसीदन्मनाः समजनि। अर्जुनः पञ्च वर्षाणि यावदमरपुरे न्यवसत्। इतस्तु धर्मराजोऽपि स्वर्गागताल्लोमशान्मुनेः क्रमशोऽर्जुनवृत्तमाकर्ण्य प्रसन्नः सन् बदरिकाश्रमं ययौ। यन्मार्गे गङ्गादितीर्थसेवाया मुनिजनसङ्गतेश्चावसरः प्राप्यते स्म। तत्राश्रमे सध्यञ्चौ नरनारायणौ नाम मुनी दृष्ट्वा युधिष्ठिरो मनसा क्षमामेकामवलम्बमानो निजैरङ्गैरष्टाभिरपि परां क्षमां धरणिरूपां स्पृष्टवान्। तयोर्दर्शनेन तदन्तिके वासेन च वनवासक्लेशं हित्वा राज्यभ्रंशक्लेशादप्यसावात्मानं मुक्तमिवामन्यत। एकदा तत्र वायुना पुरः समानीतं विलोचनासेचनमेकं[3] कल्हार[4]मुकुलमादाय क्व लभ्येत

---

१- दैत्यविशेषान्। २- प्रकृष्टो वातः प्रवातः प्रकर्षेण निःसरन् प्राणवायुरेव कवचं येषां ते। ये निवातकवचास्ते कथं प्रवातकवचा इति विरोधः। परिहारस्तु निवातकवचयो रूढित्वाद् बोध्यः। अवयवशक्त्या हि वातरहितं स्थानं निवातं भवति। ३- लोचनानन्ददायकम्। न जायते यत्र तृप्तिः तदासेचनकं विदुः। ४- कमलविशेषकुड्मलम्।

पुनरेतादृशम् इति कौतुकहर्षाभ्यां सूचिततर्षया पार्षत्या द्रौपद्या रहसि याचितः पृषद[1]श्वसूनुर्भीमसेनः क्षणं विचिन्त्य तद्विचिचीषया दिशमुदीचीं प्रतस्थे। मार्गे कौम्भकर्णमिव निद्रामुपागतं कमपि महान्तं शान्तं कपिमपश्यत्। स च कपिर्हनूमानेवासीत्। भीमस्तु तमविज्ञातत्वादवज्ञातवान्। अभीरसौ गभीरमभाणीत्—कस्त्वं भोः! अविनीतबुद्धे! मध्येमार्गं पदवीं निरुध्य निद्रासि। इतः पथोऽपसरेति। भीमस्य मुखान्निर्गता कट्वी पट्वी वाणी हनूमतो नेत्रद्वारे योजितं दत्तनिद्रारूपार्गलं पक्ष्मयुग्मकपाटं झटिति समुद्घाटितवती। स च निद्रारुणनयनः कोपारुणनयनं भीममित्यमवोचत्—भद्र! तुभ्यं स्वस्त्यस्तु। अहमिह चिरं जरया निद्रया चातुरः सन् हस्तपादाद्यवयवैः प्रत्युत्थानादिकर्मण्यपटुरस्मि। तस्मात् त्वमेव मम पुच्छमवलम्ब्य मां पथो दूरीकृत्य च स्वकार्यं सम्पादयितुमात्मनो वर्त्मना गच्छेति। तदीयं पुच्छमप्युत्थापयितुमशक्तेन भीमेन तत्पुच्छगौरवं विभाव्य महान् विस्मयः कृतः। तदनु विस्मयव्रीडापारदृश्वना मातरिश्वतनयेन सविनयं त्वं वासवलोकवासिषु[2] कोऽसीति पृष्टः कपिकुञ्जरः स्वमञ्जनायां प्रभ[3]ञ्जनाज्जातं जानकी[4]जाने रामस्य

---

१- पृषदश्वो वायुः तस्य सूनुः पुत्रः। २- वासवः इन्द्रः। ३- प्रभञ्जनो वायुः। ४- जानकी जनकपुत्री सीता सा जाया यस्य स जानकीजानिः तस्य।

हृदयरञ्जकं लेखहारकं व्याजहार। सबहुमानं तस्य वचनमाकर्ण्य भीमः प्रोवाच—यदि त्वं सत्यं रामस्य दूतो हनूमानसि तर्हि यया तन्वा पूर्वं सागरमतरस्तां तनूं मे दर्शय । येन निवृत्तसंशयोऽहं जायेय । इत्युक्तोऽसौ हेलया करचरणादिभिरवयवैः प्रवृद्धः सन् आकाशमव्यानशे[1] । तादृशं पर्वतसमं विशालं हनूमतो रूपं दृष्ट्वा भीमः प्राङ् मूर्च्छामुकुलितनेत्रः संजज्ञे परतश्च जाते प्रबोधे तं प्रति श्रद्धाबद्धाञ्जलिरभूत्। सविनयमेवं व्यजिज्ञपच्च-आर्य ! त्वमजय्योसि । ममोग्रं वागपराधं क्षमस्वेत्यभिधाय चरणयोः पतितं भीमं चिबुके धृत्वा शिरस्युपाघ्राय च मसताख्यापनविधयापराधक्षमामिव सूचयित्वा हनूमान् भीमं गन्तुमनुज्ञातवान् । हनूमतानुमतो भीमो यावदग्रे गच्छति तावत्तेन गन्धमादननामा कुलाचलोऽदर्शि । गन्धमादनशिखरे कुबेरस्त्रीभिः स्वीयकेशप्रसाधनकर्मण्युपयुज्यमानैः सौगन्धिक[2]प्रसूनैरामोदिनीमेकां दीर्घां दीर्घिकां स दृष्टवान् । तत्र वापिकायां विद्यमाना हंसा मूर्तिमन्ति कुबेरयशांसीव प्रतीयन्ते स्म । ते हंसा भीमं विलोक्य भयादिवापससृ ुः । अथ कक्षायां गदां स्थापयित्वा मुक्ताभ्यामुभाभ्यां कराभ्यां सर्वाण्यपि तत्र विकसितानि रक्त-

---

१. व्याप्तवान् । २. कह्लारपुष्पैः ।

कमलानि भीमो लुलाव। तदात्व एव तद्रक्षिणः कस्त्वं रे जाल्म ! आयुरग्रभूमिमारुरुक्षसि इति समन्ततो निरुन्धानान् यातुधानान् स भीमो रंहसा समुपबृंहितसिंहनादश्चिरमुपोषितस्य परिघस्य[1] पारणां[2] परिकल्पयांचक्रे। तान् राक्षसान् हत्वा रक्तकमलानि चादाय भीमः पर्वतस्योर्ध्वभागस्थितवस्तुदर्शनासक्तं चक्षुर्बलादाकृष्य तत्समतलभूम्यामेव पुनः प्रत्यावृत्तः। तदानीमितरेष्वपि भ्रातृषु हिडिम्बासूनोर्घटोत्कचस्य स्कन्धशिविकामधिरुह्य तस्यैव पर्वतस्य कटक[3]भुवमागतेषु सत्सु मारुति[4]रादरेण रहसि तां विकसितां कुसुमसंहतिं मूर्तानुरागभ्रमदां प्रमदां[5] प्रत्युपदा[6]मकरोत्। तानि च पुष्पाणि धार्त[7]राष्ट्राकुलीकृते सरसीव द्रौपदीकेशपाशे सुखमासांचक्रिरे। कदाचिदाखेटाय तटाटवीं पर्यटति तस्मिन् वकद्विषि भीमे जटो नाम दुर्जटः सुरारिरुटजमुपेत्य वेदिकया वैतानतनूनपातं[8] इव दयितया सह त्रीनपि युधिष्ठिरनकुलसहदेवान् निजस्कन्धमानीय जवात् केनचिदपदिश[9]पथेन प्रतस्थे। क्रूरे द्यूतसभावसाने वनं यियासोर्यस्य युधिष्ठिरस्य जटासु

---

१- गदायाः। २- भोजनम्। ३- कटकोऽद्रेर्नितम्बः। ४- मरुत्पुत्रः भीमः। ५- स्त्रियं द्रौपदीमित्यर्थः। ६- उपदाम् उपायनम्। ७- सरःपक्षे धार्तराष्ट्रा हंसविशेषाः। ८- यज्ञियवह्निम्। ९- दिशामध्येऽपदिशम्।

रोधो न बभूव हन्त तस्यैव विजृम्भमाणकरुणे तस्मिन् वने जटासुरो[1]ऽधोजनि। प्रतिष्ठमानश्चासौ क्षोदिष्ठो जठासुर एतान् वने सुदूरं नीत्वा किं कर्तव्यम्। अत्रैव नेदिष्ठे स्थले किं न व्यापादयामि इति चिन्तयन्नवास्थित। तावत्येव वनान्तात् मृगयान्ते निवर्तमानो गजगामी भीमो मार्गमध्ये जटासुरेण दृष्टः। तदातिदृप्तोऽसौ भीमेन सह योद्धुं तीव्रमभिलाषं मनसि कृत्वा युधिष्ठिरादीन् भूमावुदतारयत्। भीमस्तु तदेतदत्याहितं[2] निभाल्य शल्यवन् मुष्टिप्रहारेण तस्य रक्षसो भयङ्करं मस्तकं पर्यस्तयत[3]। भीमेन च्छिन्नशिरसो जटासुरस्य भारेण नमन्ती वनधरणी पापिनस्तस्याङ्गस्पर्शे सङ्कोचादिव निम्नभावं गता प्रतीयते स्म। ततो जटासुरवधादिविधिना शमितोपद्रवं तं पर्वतमधिवसन्तस्ते युधिष्ठिरादयो बहुधा तत्तन्निवातकवचकालकेयादिराक्षसगणसंहारद्वारेण नष्टसमस्तशत्रुतयेन्द्रस्य सौख्यमुपपादयतोऽर्जुनस्य सङ्गमेन च परामानन्दकोटिमाटीकन्त। ईशेन सह स्वयुद्धस्य वृत्तं क्रमशो भाषमाण-

१- यस्य जटासु रोधो नाजनि तस्यैव जटासु रोधोजनीति विरोधः। परिहारस्तु—जटासु केशेषु रोधः प्रतिबन्धः। जटासुरोऽधः अधस्तादजनि। उपरि युधिष्ठिरादयस्त्रयोऽत्रस्थिताः। अधस्ताच्च तेषां जटासुर इत्यर्थः। २- अत्याहितं महाभीतिः। ३- व्यनाशयत्।

मर्जुनं शिरःकम्पनद्वारा प्रशस्यानुजैः समं युधिष्ठिरो हिमाद्रिं विहाय द्वैतवनं पुनरायातः। तत्रातिकठोरं तपस्यतः पाण्डवान् दृष्ट्वा मुनयो विसिष्मियिरे। एवं तपस्यत्सु तेषु कदाचिद् दुर्योधनः स्ववैभवं दर्शयित्वा विजितानामेषां धैर्यं ध्वंसयितुं ससैन्यो घोषयात्राच्छलेन द्वैतवनमागतवान्। तत्र यथाविभागं सेना अवस्थाप्य स सबन्धुवर्गः समुन्नतस्य वटतरोरधःप्रदेशे स्ववैणिकैः क्रियमाणं गीतमश्रृणोत्। यावदसौ गीतान्याकर्णयति तावत्तदीयं वैभवप्रदर्शद्वारा मानसव्यथाप्रदानात्मकं पारुष्यं विभाव्य कुपितेनेन्द्रेणादिष्टः सज्जीभूतसैन्यानुयातश्चित्रसेनो नाम गन्धर्वस्तदीयां समस्ताममूं चमूं चमूरुततिमिव तरक्षुः[1] स्ववादेनास्तव्यस्तां चकार। तदानीं भयेन धावत्सु भटेषु कुञ्जरवन्मञ्जुगमनः कर्णः क्रुधा कालपृष्ठं नाम स्वं धनुः करेण विस्फारयन् चित्रसेनं प्रति जगाम। लोकानां कर्णेष्वमृतदायिनोपि गन्धर्वाः कर्णे कठोरान् बाणान् व्यसृजन्। तदनु विश्वातिशायिनो विश्वावसुनामकगन्धर्वपुत्रस्य चित्रसेनस्य शरगणेन सह जवकृते कृतपणबन्ध इव धावति राधेये क्रन्दत्सु कुरुवृन्देषु च सर्वेपि गर्वेण गन्धर्वगणा दुर्योधनमायोधनधरणीमध्यभाजं रज्जुभिराबध्य गर्जन्तो रभसवर्जं

१. तरक्षुः मृगादनः।

निर्जर[1]पथमनैषुः। दुर्योधनबन्धनेन दुःखमनुभवन्तो लज्जमानाश्चापि कौरवाः किंकर्तव्यविमूढाः सन्तो नीयमानस्य तस्यावलोकनार्थं मुखमुन्नमय्याकाश पश्यन्तस्तस्थुः। सोरस्ताडं रुदत्यश्च दुर्योधनस्त्रियः कदाचिदप्यमुक्तदयं युधिष्ठिरं शरणं प्रपन्नाः सगद्गदमेवमभिदधुः— अद्य युष्माकं भ्राता दुर्योधनस्त्वत्पादपद्ममूलमवलोकयितुं सबन्धुगणो वनमिदमायातः। कारणलेशमपि विनैव तमयं देवगायको रज्जुसंयमितं कृत्वा दिवं नयति। इति परमं नः कष्टमुपस्थितं तत् त्रायस्व। यतोऽस्माकं स्वामी शत्रुणा नीयतेऽतः प्रार्थयामहे यदस्मत्स्वामिनं मोचयित्वाऽस्माकं सधवाभावं रक्ष। वयं विधवा मा भूमेति। इति ताभिर्दीनभावं पुरोधाय निवेदितस्य युधिष्ठिरस्य राज्ञो निदेशेन निर्गत्य सत्वरमनुधावतां भ्रूदण्डमिव कोदण्डमपि कोपेन कुटिलीकुर्वतां भीमप्रभृतीनां सिंहनादचापनादाभ्यां तत्क्षणं वियदखिलं मुखरितमासीत्। अर्जुनस्त्वेवमुवाच— अयि गायकाः! युद्धविरतानां गानमात्ररसिकानां भवतां गन्धर्वाणां युद्धप्रवृत्तिः कथं जातेत्याश्चर्यम्। किं भवन्तो महादेवादपि रणेऽबिभ्यतोऽर्जुनस्यात्र वने वासं नाकर्णितवन्तो येनैतादृशं कुरुवंशिबन्धनात्मकं धृष्टत्वं कर्तुं प्रवृत्ताः।

---

१- निर्जरपथमाकाशम्।

इति विजयस्य वीरवादेन पुनरपि निवर्तमानैर्वीणामंसेषु निबध्य बाणासनमेव करे कूजयद्भिस्तैर्नभश्चरैः सममेषां महान् सङ्गरोऽभूत् । अर्जुनेन गाण्डीवात् प्रहृतैः शरैः क्षतवपुषो गन्धर्वा गलितयुद्धदर्पा भीताश्च सन्तो वेगेन पलायिषत । तत्र शक्रसुतस्य तादृशं विक्रममभिनन्द्य कृतसंधानेन गन्धर्वराजेन समर्पितं पौरुषहीनमिदं न पुरस्करणीयमिति बन्धनमिषेण पश्चादुपनीतबाहुयुगलं दुर्योधनमादाय ते भीमादयो युधिष्ठिरस्य संनिधिं प्रत्यनयन् । वृक्षान्तरालस्थिता द्रौपदी तदवस्थं दुर्योधनं वीक्ष्य निरुद्धैरपि निर्गतैः स्वहासैरन्तिकस्थलतासु पुष्पाणीवोद्भावयामास । सरलो युधिष्ठिरस्तु दुर्योधनमेवमवादीत्—हे वत्स दुर्योधन ! त्वं कुरुपुरुप्रभृतिवीराणां वंशे जातो बहुभिर्भ्रातृभिर्युतो राज्याधिकृततया सैन्यशक्तिसंपन्नोऽप्येवं वैणिकैः[1] कथं पराजीयसे । अनुचितमाश्चर्यंकरं चेदं वृत्तम् । राजन्यानां परकृतः परिभवो राजयक्ष्मरोगतुल्यो विनाशको भवति इति । ततो भीमेन बन्धाद् विमुच्य विसृष्टोऽसौ दुर्योधनश्च्युतं मानं मृगयमाण इवातिनम्रो वाचंयमेन महता बलेन ययौ । भृशं लज्जितः प्राणान् हातुं पथि निरशनव्रतमङ्गीचकार । लज्जया निराहारः सन् मार्गे

---

१- वीणावादनं शिल्पं येषां ते वैणिकाः । गन्धर्वा इत्यर्थः ।

स्वं समापयितुमियेष । प्रायोपवेशनमाश्रितः स कदाचिद-लम्बुसादिभिः कौणपै[1]स्त्वत्साहाय्यं करिष्याम इत्याश्वासनं स्वप्ने लम्भितः । तदाश्वासनमधिगत्य गत्यन्तराभावाद् भ्रातृभिर्मरणाद् वार्यमाणः स पुनरपि ससैन्यां स्वां राजधानीं प्राप्तवान् । इन्द्रो मां गन्धर्वैः पुनरपि मा बबन्धदित्यतः सुधासदृशैर्हव्यैरिन्द्रमाराधयन्नसौ पौण्डरीकं नाम यज्ञमनुष्ठितवान् । सानुजो राजा युधिष्ठिरः पुनरपि काम्यकवनमायातः । तत्र मुनिभिः कन्दमूलादिना सत्क्रिय-माणस्तृणबिन्दुनाम्नो मुनेराश्रमे तद्वचवमाद्रियमाण-स्तस्थौ । मुनिस्त्रियो यदोटजसमीपे मुक्तकेशीं वल्कल-धारिणीं च द्रौपदीमपश्यन् तदा तासां महान् विस्मयो जातः । या द्रौपदी द्यूतसभायामनन्तं कौशेयपटराशि-माविरभावयत् सेयं वल्कलं परिधत्ते इत्याश्चर्यं ताः प्रति-पेदिरे । यो द्रौपद्याः करः स्वस्पर्शमात्रेणातिलघुनि पात्रे तादृशं माहात्म्यमुद्भावयति येन तत्पात्रं सर्वदा परमान्न-पूर्णमेवावतिष्ठते । यत् परमान्नमाकण्ठमभ्यवहरन्तश्चाति-थिजनाः स्वतनोस्तनुत्वमपनयन्ति तत्रैव तस्याः करे कन्दमूलादि समर्पयितुं प्रवर्तमाना मुनिस्त्रियो लज्जासागरे ममज्जुः । अत्रान्तरे यथा सिन्धुराजः समुद्रश्चन्द्रदर्शनेन

---

१- राक्षसैः ।

वेलामतिक्रामति तथा चन्द्रतुल्यं द्रौपदीमुखं दृष्ट्वा सिन्धुराजो जयद्रथः कामाकुलः सन् मर्यादामुल्लङ्घ्य तां बलाद् गृहीतवान्। ततः क्रन्दन्तीं कुररीमिव निन्दन्तीमेनां पुरस्तादधिरोप्य धावता रथेनाल्पकाललङ्घितपरीणाहवनीपथं जयद्रथं निशमितप्रमदावार्तेनार्तेन युधिष्ठिरेण नियुक्तौ भीमार्जुनौ शरासनं विकीर्य मृगयानिवृत्तमात्रेण चरणेन द्रुतमन्वद्रवताम्। क्षणादेव च कर्णान्ताकृष्टधनुःप्रत्यञ्चेन धनंजयेन सपत्राकृतो[1] धृतत्रासतया विनयविपर्ययो विद्यामिव कृष्णां विमुच्य कृतपलायनः स दुर्मेधा जयद्रथः पुरःप्रधावितेन भीमेन रुरुधे। भीमस्तं केशेषु गृहीत्वा यथा हस्तेन ताडयामास तथा वामपादेनापि भृशं ताडयित्वा क्षुरेण शिरो मुण्डयित्वा तस्य शिरसि यत्र तत्र पञ्च चूडाः प्रक्लृप्तवान्। ताश्चूडास्तस्यान्तर्हृदि निर्वाणं भजतः पञ्चबाणाग्नेर्धूमशिखा इव विरेजुः। राजा युधिष्ठिरस्तु हे कुत्सिताचारप्रसित जयद्रथ ! वयं दुर्योधनभगिनीदुःशलावैधव्यभयादेव त्वामधुना जीवन्तं त्यजामः। इतः परं कदापीदृशं दुश्चेष्टितं न चेष्टितव्यं त्वयेति कथयित्वा तं बन्धनान्मोचयित्वा च गन्तुमनुज्ञातवान्। हतमतिः स जयद्रथः पाण्डवप्रत्यपकारचिकीर्षया हिमशैले भृशं तपश्चचार। तपस्यावशाद् दृष्टिविषयतां गतः शिवस्तस्मै पाण्डवांस्त्वं



१- शरैरतिव्यथां प्रापितः।

युद्धे रोद्धुं प्रभविष्यसि। परमर्जुनं रोद्धुं न शक्ष्यसि। विजयं च पाण्डवेषु न प्राप्स्यसीतिमात्रं वरं दत्तवान्। हेमन्तादिव जयद्रथकृतापहारकष्टात् पद्मिनीमिव द्रौपदीं निर्गतां प्राप्य सूर्यकरा इव पाण्डवाः परां रतिमापुः।

तत्रान्तरे ज्वलितवर्णदेहः सूर्यः कदाचिद् रात्रौ कर्णं नाम स्वसुतं वीरमवाप्य तेन प्रणतः सन्नाशीर्वादपुरःसरं तमेवमुवाच—हे पुत्र ! यतः पितरः पुत्राणां शुभमनुध्यायन्तीति नियमोऽतोऽहं तव तातस्तव शुभमेव ध्यास्यामि। तेन मदुक्तं शासनं त्वयावश्यमङ्गीकार्यम्। अहं तुभ्यमेते कवचकुण्डले ददामि। एताभ्यां नित्यानुषक्ततया सन्धातुं पृथक् कर्तुं चाशक्याभ्यां कवचकुण्डलाभ्यां तव परा शोभा जनिष्यते। ब्राह्मणरूपमास्थाय कदाचिदेतानि कवचकुण्डलानि याचितुमिन्द्रस्त्वदभ्याशमेष्यति। त्वया तस्मै समागतायैतानि न प्रदेयानि। एतत्कवचकुण्डलायत्तं तवावध्यत्वम्। अतो नैतां ममाज्ञां कथमप्यतिवर्तेथाः। इति सूर्यस्य गिरं निशम्य रचितस्मितो राधेयः प्रहृष्टः सन्नेवं प्रतिभाषितमाददे—अयि दिनपते ! भगवन् ! 'यः खलु ददाति सोऽर्यमा' इति श्रुतेस्त्वं स्वयमर्यमा बहुदाता प्रसिध्यसि योग्यपात्रायैव च त्वया दीयते। एवं सत्यपि तव जिह्वा मां दानान्निषेद्धुं कथं प्रवृत्तेत्याश्चर्यम्। यो

हस्तो याचकजनदारिद्र्यापनयने बद्धस्पृहो न भवति स पुरुषस्य स्वनाम्नः 'शयः'[1] इति पदस्य विपर्ययेण निष्पन्नस्य 'यशः' इति पदस्य वाच्यमर्थं कीर्तिरूपं कथंकारं जनयेत् । संग्रहैकपरः प्रायः समुद्रोपि रसातले इत्युक्तत्वाददातुः कीर्तिर्न जायते। प्राणिनां जन्मनः फलं यश एव। अतस्तदर्थं यतनीयम् । अन्यगुणसद्भावेपि कीर्तिविरहे लोकः सम्मानपात्रं न भवति । दानमर्मज्ञाः पण्डिताः स्पर्शनेन[2] रहितं कृपणं स्पर्शनेन रहितं कुणपं[3] च तुल्यौ ब्रुवतेऽतः शवतुल्या मा भूमेत्यवश्यं दानं कर्तव्यम् । सर्वतः सम्पत्तिशाली शक्रो यदि मामुपेत्य याचेत तदा तदीयं मनोरथं पूरयित्वा सकलदातृसमूहमूर्धन्यभावं भजेयमेवेति मम दृढो निश्चयः । तदलं भवतो निषेधेनेति । एवं कथयतः कर्णस्य निश्चयेन व्यर्थीभूतनिषेधाभिप्रायोपि तदीयदाननिष्ठाज्ञानेन विस्मयं प्रपन्नः कमलवनबन्धुः सूर्यः स्मितपूर्वकं कर्णं पुनराह अयि वत्स ! भवतो भाषितं लक्षाणां स्थूललक्षाणां[4] सलक्षणं लक्ष्यते । अतस्त्वं धन्योसि। तथापि कवचकुण्डलं याचितुमागतमिन्द्रं त्वं प्रागेव

---

१- शयः हस्तः करः इति पर्यायाः । २- दानेन । विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् इति दानपर्यायाः। अन्यस्य स्पर्शनशब्दस्य तु स्पर्श एवार्थः। ३- शवम् । ४- दानशौण्डानाम् ।

तदर्थितदानात् तदीयां शक्तिं प्रार्थयस्व। ततस्तथेत्यङ्गीकृत्य पश्यतः कर्णस्य समक्षमचिरेण स मरीचिमाली चरमाचलशिखरविहारमरं समाचचार। ततः कदाचिद् याचकवृन्दैः स्तूयमानं कर्णमुपेत्येन्द्रस्तदीये अतिरमणीये कवचकुण्डले अयाचत। स कर्णोऽपि तद्दानं स्वीकृत्येन्द्रस्य शक्तिं प्राप्तवान्। कवचार्थकं दंशनपदं कुण्डलार्थकं च कर्णवेष्टनपदं ते एते उभे अपि नकारयुक्तत्वात् कदापि नकारमस्पृशतो मम कर्णस्य शत्रुभूताविति कोपादिव कर्णः खड्गेन छित्त्वा ते दंशनकर्णवेष्टने शक्राय प्रायच्छत्। कवचकुण्डले गृहीत्वा कर्णमापृच्छ्य स्वर्गमायातः शक्रः सिद्धमरुदप्सरसां समाजे कर्णस्य वदान्यत्वं[1] प्रशशंस। तावत् ते पार्था अपि पुनः काम्यकवनसीमां हित्वा ब्राह्मणसमुदायैरनुगताः पूर्वमसेवितान् पुण्यसरोवरादीनवगाढुं बद्ध्वा द्रौपद्या सह द्वैताख्यं तपोवनमेवायुः। तत्र कदाचिदाश्रमद्वारि 'हा हा महाभागाः! मम होमसाधनमरणिमपहृत्य हरिणोऽयमितो धावति' इति वाष्पायमाणस्य कस्यचिदग्रजन्मनः शोकनिवारणाय चक्रीकृत्य चापमनुधावतस्तान् पार्थानरणिं विषाणयोर्बिभ्राणः कतिषुचित् पदेषु सुग्रह इव कतिषुचिद् दुरासद इव विचित्र-

---

१- दानशौण्डत्वम्।

गतिः कोऽपि कृष्णसारो दूरमाकृष्य स्वयमन्तरधात्। तदनु तपद्भ्यां व्योमपृथिवीतलाभ्यां समधिकपिपासाजननपरे मध्याह्ने जायमाने सति मृगमिव पानीयमपीतस्ततो विचिन्वद्भिरनुजैः सह कस्यचिद् विशालस्य वनशालस्य[1] मूलभूतं तच्छायामण्डलमिव पाण्डवो युधिष्ठिरः शनैः शनैरुपससर्प। कमलसुगन्धहरेण वायुनात्र दिशि कापि वापी स्यादित्यनुमाय तां दिशं प्रयातेषु जलाहरणाय भीमादिषु विलम्बमानेषु तदनागमदुःखार्त्तो युधिष्ठिरस्तत्पदाङ्कानुसरणचिह्नान्यवलम्ब्य कामपि वापीं प्रापत्। तद्वापीतीरे कमलपत्रपात्रहस्तान् मृत्वा भूमौ पतितान् भीमादीन् भ्रातॄनवलोक्य रुदतो युधिष्ठिरस्याश्रुभिर्यत्र पतितं तत्रैव वपुषापि पतितम्। निश्चेष्टसमस्तदेहश्चासौ भूमौ पतितो राजा भीमादिभिरुपभुज्यमानां निश्चेष्टतारूपां दशां स्वयमपि विभज्य भुञ्जान इव प्रत्यभात्। ततस्तत्तडागसरसीतरङ्गवातास्तं युधिष्ठिरं क्रमशश्चैतन्यमलम्भयन्। स च क्षणादेव किंचिदुत्थाय परितः शून्यशून्या दिशो दशापि विलोकयमानः शनैः शनैरुपसृत्य शोकचञ्चलेन कराञ्चलेन तान् भ्रातॄन् पर्यायशः परामृश्य वाष्पधारामभिवर्षन् एवं विलपितुमारभत—हे वीरा मम भ्रातरः!

---

१- वनवृक्षस्य। अनोकहः कुटः शालः इति वृक्षपर्यायाः।

ग्रामाद् ग्राममपि गन्तुं मदादेशमनुपालयतां भवतां सम्प्रति लोकान्तरप्रयाणं मामनापृच्छ्य कथं जातमिति भृशं दूये खिन्नोये च। निर्दयेन भाग्येन मातृसुखवञ्चितयोर्नकुल-सहदेवयोः कन्दमूलफलाशिनोरपि मया सह भ्रमणं न सेहे। भो अर्जुन! यो भवान् स्वयमव्रणः सन्नेव हरस्य मस्तके व्रणमाधत्त तस्य तव प्राणेषु रणं विनैव को व्रणं विधातुं प्राभवत्। हे प्रिय भीमसेन! त्वदीयं निधनं श्रुत्वा दुर्योधनादय आनन्दाश्रु प्रवाहयिष्यन्ति। वकासुर-नाशनद्वारा रक्षितप्राणा एकचक्रापुरीवासिनश्च शोकेनाश्रु प्रवाहयिष्यन्ति तदयमीदृशः कालः समापतितः। मयि युधिष्ठिरेऽप्यत्र वापीतटे प्राणान् मुञ्चति सति सा पति-प्राणा पतिव्रता याज्ञसेनी खल्वप्यज्ञातास्मदीयवृत्तान्ता सती श्वापदानां भक्ष्यतां गच्छेत्। हा माद्रि! हा कुन्ति! युवयोर्वनभूमिरेव पुत्रप्रसूतिविपदोः पदतां प्रपेदे। इत्थं बहु विलप्यैतद्वापीजलमेव पीत्वेमे मृतास्तदहमपि जलमिदं पिबामीति निश्चित्य युधिष्ठिरे वाप्या उदकं पातुं प्रवृत्ते सति कोऽप्यदृश्यः पुमान् गगनस्थित एव गम्भीरं वच उवाच—राजन् मदुक्तिसरणेः प्रतिवाक्यदानमुपेक्ष्य देवोऽप्यत्र जलं पातुं नेष्टे। एते तव भ्रातरः स्वबलाव-लेपाद् मदीयं वचोऽवमत्य पीताम्भसः सन्तो दीर्घनिद्राम-

वापुः । मत्प्रश्नोत्तरदानमकृत्वैव पयः पातुं प्रवृत्ता इमे सद्य एव मृताः । तस्मान्मदुक्तानां प्रश्नानामुत्तरं दत्त्वात्र सरसि जलं पिबेति कथयतो नभःस्थितस्य पुंसः प्रश्नानसौ युधिष्ठिरो यथार्थैरुत्तरैः प्रत्युद्ययौ । तदनन्तरं कटिलम्बितवल्कलः कमनीयस्मितधौतयज्ञसूत्रः कुशबर्हवतंसितो जटालः स पुमान् यक्षाभिधानो धर्मदेवः कुरुराजस्य युधिष्ठिरस्य पुरोऽवतीर्य तस्थौ । स तु तत्र लोकातिगेन निजेन तेजसा कुड्मलीकृतकरकमलयुगलं तं युधिष्ठिरं प्रेममेदुरमेवमवादीत्—अये वत्स ! मां धर्ममवेहि । विरोधिजनवितीर्णं विविधं विपिनक्लेशमनुभवतो भावं बुभुत्सुरेवमाचरिषम् । तद् बहुधा परीक्षितेन भवतः शीलेन समञ्जसेन प्रश्नोत्तरेण च प्रसेदिवानस्मि । तस्मान्मदनुग्रहेण स्वप्नान्निवृत्तैरिव भूयोऽप्युत्थितैरनुजैः सह त्रयोदशे वत्सरे वेषान्तरवन्तं भवन्तं कोपि न जानीयादिति वरमर्पणं च विस्मयविस्मारितनयनपरिस्पन्दनाय निजनन्दनाय प्रतिपाद्य सद्यः स पुमानन्तर्दधे । एवं यमाद् वरं लब्ध्वा प्रसन्नेन मनसाऽऽश्रममुपगतेष्वेषु ब्राह्मणः स्वमरणिकाष्ठं समवाप्य शुचं समापयत् । एते पाण्डवा अपि द्वादशवार्षिकं वनवासावधिं समापयन् ।

द्वादशवर्ष-पर्यन्तं वन-वासं समाप्य त्रयोदशं वर्षं गुप्त-वासेन गमयितुम् इच्छन्तः पाण्डवाश् चिरं पोषितान् अनुचरांस् ताम् अध्युषिताम् अटवीं च विजहुः। ततोऽगस्त्य-शापात् प्राप्ताऽजगरभावं नहुषं तत्प्रश्नोत्तरदानेनोद्धृत्य तद्दशादर्शनेन भाग्यविपर्ययकष्टं सहमानया द्रौपद्या सहितास् ते स्वतेजसो गोपनं जिज्ञासमाना इव मात्स्यनगर-समीपश्मशानस्थितं शमीवृक्षम् अभजन्। तत्र शमीतरौ तदन्तर् ज्वलद् अग्निकल्पं शस्त्रं निधायाऽमी स्वरूपपरिवर्तनं कृत्वा विराटनगरं गतवन्तः। तेषु धर्मराजो युधिष्ठिरः संन्यासरूपम् आस्थायाऽऽत्मनः कङ्कसंज्ञकत्वं च प्रकाश्य राजानं विराटम् उपासदत्। सभायाम् अनवरतं विराटेन सह द्यूतं क्रीडन् सभिकोऽभवत्। भीमोऽपि दर्वीं करेण गृह्णन् पाचकत्वेन तत्राऽऽगतः। राज्ञो महानसे बल्लवसंज्ञया प्रधानपाचकत्वे नियुक्तः सन् रुच्यैर् भोजनैः स्वस्वामिनम् आराधयामास। अर्जुनोऽपि स्त्रीत्वस्य वीरजननिन्दिततया पुंस्त्वस्य चाऽन्तःपुरवासप्रतिबन्धकतया तदुभयस्वीकारस्याऽयोग्यत्वे षण्ढत्वम् अवश्यम्भावीति षण्ढत्वम् अवलम्ब्य विराटम् उपाजगाम। विराटगृहेऽवस्थितः स बृहन्नलाऽऽख्यस्तालपाणिर् विराटस्योत्तरादिकाः पुत्रीर् नृत्यकलाम् पशिक्षयत्। नकुलोऽपि ग्रन्थिकाऽऽह्वः करधृतकशत्वेनाऽश्व-

विद्यानैपुण्यं प्रकाश्य विराटस्याऽश्वशालाऽधिकारे नियोगम् अलभत । सहदेवोऽपि तन्तिपालाऽभिधो विराटस्य गोशालाऽध्यक्षताम् अङ्गीचकार । तेषां पत्नी द्रौपद्य् अपि हस्ते कङ्कतिकाम् आदाय नीरन्ध्रा सैरन्ध्रीभावं व्यञ्जयन्ती सती विराटपत्न्याः सुदेष्णायाः समीपदेशं गता । समस्त-जनवन्दनीयैः सस्पृहनिरीक्षणीयैस् तिलकैर् विराटस्यान्तः-पुरिकाः प्रत्यहमलंचकार ।

सा भृशमादृतकङ्कतम्[1], अतिरसोत्पादनचणम्[2] अधिकशोभानाटनपाठवम्[3] आश्रितगन्धर्वकुलम्[4], आकलित-गोत्रान्तरं[5] पञ्चधा रूपम् उदञ्चयन्ती पञ्चापि पतीन् अनुयातवती । एवं तैस् तैः स्वकृत्यैर् एभिः सम्पादितं

---

१- कङ्कस्य भावः कङ्कता । आदृता कङ्कता यस्मिन् रूपे, तद् इति युधिष्ठिरपक्षे । द्रौपदीपक्षे तु कङ्कतं कङ्कतिका आदृता यस्मिन् इति योज्यम् ।

२- रसाः रसयुक्ताः पदार्थाः, तेषाम् उत्पादने निपुणम् इति भीम-पक्षे । द्रौपदी-पक्षे तु रसानां शृङ्गारादीनाम् इति योज्यम् ।

३- अधिकं शोभा-नाटनानां शौभिकानां नटानां पाटवं यस्मिन् इत्यर्जुनपक्षे । द्रौपदीपक्षे तु कं शिरः तस्मिन् इत्यधिकम् । शिरसि इत्यर्थः । शिरःशोभाप्रसाधननैपुणीयुक्तम् इति योज्यम् ।

४- गन्धर्वा वाहा इति नकुलपक्षे । गन्धर्वा देवयोनिविशेषा इति द्रौपदीपक्षे ।

५- गवां समूहो गोत्रा इति सहदेवपक्षे । गोत्रान्तरम् इति द्रौपदीपक्षे ।

प्रसादं संततम् अनुभवता महीपतिना विराटेन बहुमानिताः पाण्डवा यथा विवासनखेदं नाऽज्ञासिषुस् तथा तदीयं स्वरूपम् अपीतरे जना नाऽज्ञासिषुः।

अथैकदा तत्र सुदेष्णायाः प्रेषणेन मदनोत्सवासवाय वासवायतनसदृशं वासगृहम् आगतां कौरवाधमदुःशासन-करपरामर्शक्लेशाद् इव विवर्णेन वाससाऽवगुण्ठिताङ्गीं राजतभाजनेन राजितकराऽञ्चलाम् अचञ्चलाम् पाञ्चालसुतां द्रौपदीं विलोक्य पञ्चेषुबाणवञ्चितविवेको मञ्चाद् उपसृत्य किञ्चिद् आकुञ्चितमौलिः कीचको नीचां वाचम् उवाच—

हे सैरन्ध्रि ! त्वच्चरणस्पर्शेन गृहम् इदं त्वद्दृक्पातेनाहं च धन्यौ जातौ। कमलावलीमध्ये तव मुखं निर्मातुम् उचितम् आसीत्। तद् विस्मृतवता ब्रह्मणा कमलसमीपे हंसपादं[1] निर्माय मार्जिता स्वीया त्रुटिर् इति मन्ये। धराधूलिधूसरतनुर् अपि त्वं हरकोपानलदह्यमानकामदेह-धूमलताऽऽच्छन्ना रतिर् इव प्रतीयमाना मम मनो बलवद् आकर्षसि। अत्रैकान्तस्थाने निःशङ्कम् अहं त्वदधरं पातुम् इच्छामि। त्वं च स्वाङ्गदानेन मां रक्ष। सर्वथोपयुक्तोऽयं समयः प्राप्तस् तद् अलं कालहरणेनेति।

तस्य तादृशं वचनम् आकर्ण्यापि चित्तचम्पकमञ्जरी-

---

१- ∧ इत्याकारा त्रुटि-मार्जन-रेखा हंसपादः। अर्थान्तरं तु सुगमम् एव।

चञ्चरीकायमाणपञ्चशरविकारा[1] पाञ्चाली गिरम् इमां स्मर-राग-तिमिर-कौमुदीम्[2] उदीरयामास—अयि कीचक नीच! त्वम् अन्तःपुरेषु विहरन् अपि सैरन्ध्र्यै स्पृहयसीति विगर्ह्यम् एतत्। नहि कल्पद्रुम-कुसुमाऽनुरागी भ्रमरः श्मशानतरुप्रसूनस्तबकेऽनुरागं भजते। तद्वद् अन्तःपुरस्थ-ललनाविहारिणस्तव दासीकामना नितान्तनिन्द्या भवति। पतिव्रतां नारीम् उद्दिश्य यदि कोऽपि पुरुषो हठात् बलात्कारप्रवृत्तिम् आधत्ते तदा तादृशवनितापरिष्वजनात् पूर्वम् एव स हठप्रवृत्तो नरो मृत्युम् आप्नोति। तद् इह दुरन्ते कर्मणि मा स्म पदं धास् त्वम् अन्ध इव। मम पतयः पञ्चसंख्यकाः सन्ति। कन्दर्पसमरूपाश् च ते गन्धर्वाः प्रच्छन्नस्थिताः सावधानतया मां रक्षन्ति। यदि त्वं पर-दाराऽभिमर्शनरूपे पथि पदम् आधातुम् इच्छसि तदा कृतकोपास् ते मम गन्धर्वाः पतयस् त्वां यमपुरगामिनि मार्गे चारयिष्यन्तीति।

एवं कथयित्वा द्रौपदी कीचकं हित्वा गन्तुं प्रवृत्ता। यथा पलाय्य गच्छन्त्यास् तस्याश् चरणद्वयम् आयासवशाद् रक्तम् अभूत् तथा स्वापमानजनितेन कोपेन कीचकस्य

---

१- चम्पक-सविधे चञ्चरीको न समायातीति लोक-साहित्ये प्रसिद्धम्।

२- कामवासना-ध्वंसिनीम् इत्यर्थः।

नयनद्वयम् अपि रक्तम् अजनि । 'कामात् क्रोधोऽभिजायते' इति स्मरणात् क्रोधस्य सर्वाकार्यप्रवर्तकतया च कीचको द्रौपदीं केशेषु गृहीत्वा पद्भ्यां कराभ्यां चातीवातीतडत् । ताडनावसरे मूर्छां ताडननिवृत्तौ च संज्ञां लब्ध्वा सा चक्षुर् उन्मीलितवती । तदनु शनैः शनैर् उत्तस्थुषी विलुलितचूर्णकुन्तला चमरी मृगीव कीचकवंशस्य प्रथमाम् ईतिबाधाम् इव वाष्पधाराम् उत्सृजन्ती क्वचिद् अपि शरणम् अलभमाना सा मन्दं मन्दं सुदेष्णाध्युषितं तद् एव भवनम् अभिजगाम । तथाभूतां तां दृष्ट्वावगतकीचक-वृत्तान्तोप्य् अन्तःपुरचारिवर्गः सुदेष्णाभयान् मूकस्तस्थौ । केवलं नयनाम्बु मुमोच । रात्रौ पृथुशरावम् उपधाय पाकशालायां शयानं धूमसम्बन्धमलिनवस्त्रधारणेन श्याम-घनावृत पर्वतराजम् इव प्रतीयमानं भीमं रहः सा द्रौपदी प्रापत् । कीचककृतापमानदुःखिता भृशं दीर्घं निश्वसती भीमे विश्वसती सती सा तत्समीपे स्थिता । तस्या वक्षो-जयोर्निपत्योत्पत्य च पतताश्रुणा स्पृष्टोऽत एव प्रबुद्धो भीमो द्रौपदीं पृष्टवान्—'किमिदं ते कष्टमुपस्थितम् ? कथय, कथं रोदिषि ?' इति । तथा पृष्टा कण्ठस्पृष्टा सा स्पष्टमाचष्ट-'मम सर्वं गतम् । यन्मां कीचकषिड्गः केशेषु गृहीत्वाताडयत् तन् मे न दुःखं, न लज्जा, न च वीरपत्नीत्वगर्वोऽद्य विद्यते । एकेनैव महता तेनापमानेन मे सर्वं हृतम् । यथा कोऽपि

वीतरागो यथार्थसंन्यासी पीड्यमानाम् अपि स्वस्त्रियम् उपेक्षते, तथैवार्तां त्राणार्थिनीं च मां विराटसभास्थितो युधिष्ठिर उपैक्षिष्ट। त्वं यदीमं सूतपुत्रं कीचकं न हंसि तर्हि दुःशासने हतेऽपि नाहं वेणीं समाहरिष्यामि। आजीवनं मयैवम् एव स्थातव्यम् इति मम प्रतिज्ञां जानीयाः। अज्ञातवाससमयेऽपि चारित्ररक्षणस्यावश्यकत्वाद् अत्रावस्थाने कीचकद्वारा चरित्रभङ्गस्य संभाव्यमानत्वात् त्वया च दुर्बलेन कीचकवधस्यासंपाद्यत्वाद् माम् अन्यत्र नयेत्येक एवोपायोऽस्ति नान्य इति।

एवं द्रौपद्युक्तं श्रुत्वा शयनलब्धं शोणत्वं नेत्रयोः कोपेन द्विगुणत्वं नयतो भीमस्यौष्ठः प्रकटीभवदतिकठोरवचनपंमर्दभीत्येवाकम्पत। स चोचितं वचोऽवोचद्—अयि प्रिये! ममातिदृढा गदा तावदास्ताम्। नियुद्धमात्रम् एव मयि निर्मिमाणे सति क्व मेघवाहः, क्व मरालवाहः, क्व तार्क्ष्यवाहः, क्व च महोक्षवाहः। हिडिम्बकिर्मीरजरासन्धबकासुरादिमारणेऽपि मम भुजस्य लज्जा जाता। अधुना त्वयानुरुध्यमानः सन् नराधमकीचकं निपात्य तु मद्भुजोऽवश्यं लज्जिष्यते। किं बहुना, मम हि वीरलक्ष्मीर् मया निहतस्य कीचकस्य रुधिरेण यावकितचरणा तदस्थिचूर्णेन कर्पूरकृताङ्गरागा तदयशोऽञ्जनेनाभ्यक्तलोचना च सत्य-

लंकृतत्वं प्राप्स्यति। अहम् अवश्यं तं हनिष्यामि। त्वं तावद् एवं कुरु। कृतकस्नेहेन स्वयम् आगताम् इवात्मानं प्रदर्शयन्ती स-कटाक्ष-स्मितं च व्याहरन्ती सती इमां रङ्ग-शालां तस्य संकेतस्थानं कल्पय। संकेतस्थानम् आयातस्य तस्य वधः सुकरः स्याद्, अतः प्रतार्य तम् अत्रानय। इत्याश्वासितवतः पत्युरनुमत्या पुनरागत्य नैपथ्यभवनम् अधिशयितायास्तस्या भयेन सह सा सहसा निशापि पलायिता।

अथान्येद्युः परदारलम्पटः स कीचकः पुनरागम्य रम्यां द्रौपदीम् अब्रवीत्—हे सुभ्रू! यदहं तव कचम् अगृह्णाम्, यच्च पदाघातम् अकरवम्, तन्मया रमणे प्रणयकोपे च कृत्वा त्वमपि निर्यातय। यथा सिंहं दृष्ट्वा मृगाः पलायन्ते तथा त्वत्समीपे मां दृष्ट्वा तव गन्धर्वाः पञ्च पतयस्त्वत्सकाशाद् दूरम् अपसरिष्यन्ति। तेन निःशंकं मां जुषस्व। त्वत्-प्रसादनाय मयायम् अञ्जलिरारचितः। इत्थम् अतिवेलं प्रलपन्तम् एनं प्रत्यरुच्या मुखसाचीकरणेन लज्जाजन्यत्वम् अभिनयन्ती सा द्रौपदी मृषा तृषाभिभूतेव वचनम् इदं किंचिद् उदश्रयांचकार—अयि अक्षि-गत[1]! जयद् इदम्-आरुद्धं क्षुद्रयितुमनिद्राणाय

---

१- द्वेष्य इति हृदयम्।

कामशासनमुद्रणाय को वा जनो द्रुह्यति । किन्तु, इयानेव प्रस्तुते वस्तुनि विशेषो यत् पुरुषविषये स्त्री यमनुरागं वहति सोऽनुरागस्तु लज्जायवनिकाच्छन्नत्वेन झटिति न प्रकाशते । पुरुषस्य स्त्रीविषयकोऽनुरागः खलु लज्जायवनिकाभावात् त्वरितमात्मानं प्रकटीकरोति । किमधिकं वच्मि, चतुराभिस्तव गीर्भिस्त्वदवाप्तिविघ्नो मम गन्धर्वदण्डनभयमद्योदस्यते । तस्माद् रात्रौ त्वं भीमे[1] तमसि स्थिते नृत्यशालामण्डपम् उपेहि । तत्रोपेतस्य तव तां लीलां तनवानि यथा त्वं स्वावरोधवधूनां मुखं न पश्येः' इति द्रौपद्या अ-व्यर्थं द्व्यर्थं मधुरं वचनं कर्णे कुर्वन्नमन्दानन्द-समुद्र-निमग्नः कीचकः स्वं प्रासादमासाद्य कृतोद्वर्तनः स्नातानुलिप्तः सन्नन्तरिव बहिरप्यवलिप्तो भगवति कमलबन्धौ चरमसिन्धौ पतितेसति ध्वान्तकदम्बे निरुध्यमानदिविषदध्वान्ते सज्जीकृत-स्रक्-चन्दन-ताम्बूलाद्युपकरणो निर्वर्तित-राजभोज्य-परिवेषण-कृत्येन भीमेन प्रविष्टपूर्वं तद् एव नृत्यमण्डपमगाहत । तत्र च, 'हे सैरन्ध्रि ! सालभञ्जिकेव त्वं कुत्र स्तम्भस्य पार्श्वे विद्यमानासि' इत्येवं भाषमाणोसौ भीमाधिष्ठित-शय्यासमीपमुपागात् । भीमोऽपि स्त्रैणसमुचितेन कण्ठस्वरेण मृदुलम् एवं जगाद—'हे



१- भीमसेने इति हृदयम् ।

कीचक ! यत् त्वं वधूशतम् अनादृत्य माम् अपेक्ष्यात्रागत-स्तत् त्वां बहिर्-गतप्राणम्[1] अधुना मे मनो मन्यते। एवम् अक्लिष्टं श्लिष्टं व्याहरते वृकोदराय कीचकः पुनरपि वाचं मृदुपदामुपदां विदधे—'सुतनु ! यतस्त्वं देवयोनिगतान् प्रियानपि गन्धर्वान् विहाय मां प्रतीक्षसे ततो देवत्वापेक्षयापि मम मनुष्यतां श्रेष्ठां प्रत्यायसी'-त्यादीन्यनेकानि नर्मवचांसि व्याहरन् कीचको मञ्चार्धभा-गमारोढुं यावच्छरीरोर्ध्वभागं नमयति तावत् तस्य ललाट-देशे भीमो मुष्ट्या प्रहारम् अकृत। कृते प्रतिकारस्याव-श्यकतया कीचकोऽपि भीमं मुष्ट्या प्रहर्तुममोच्यां मुष्टिं बबन्ध। ततो नितरामतान्तौ पटुशब्दवन्तौ तौ वेगेन बाहुयुद्धं कृतवन्तौ। अभूतपूर्वं तत् तयोर् नियुद्धम् अभूत्। एकः कीचको वेणुस्तु पुष्पानुसारिभिरलिभिः कृतच्छिद्रो वायुना कम्पितश्च कूजति। अयं पुनः कीचकः कामबाण-जर्जरितोऽपि वायुसुतेन भीमेन कम्पितोऽपि न किंचिच्चु-कूजेति महदाश्चर्यमजनि। भीममुष्टिप्रहारेण हते कीचके नपतिते सति पताकया सह रङ्गशाला चकम्पे। तदनु तत्र मण्डपे पिण्डीकृतं तस्य दस्योस्तरसं[2] तरसा विलोक्य प्रहर्षवत्या पार्षत्या द्रौपद्या श्लाघापूर्वकम् आघ्रातभुजः

---

१- न केवलं रागासङ्गात्, मम प्रबलमुष्टिप्रहाराद् अपीति हृदयम्। २- मांसम्।

कुरुव्याघ्रो भीमो निर्गत्य यथापुरमविकृतमानसोऽधिकृत-महानसोदरं प्रविश्य सुखेनाधिशिश्ये ।

द्रौपद्यपि तत्र नृत्यमण्डपे सतीत्वापहारपरं कीचकं भीमेन घातयित्वा भीत्येव हस्ताग्रं चालयन्ती चक्रन्द । तस्याः क्रन्दितं निशम्य किमिदं किमिदम् अत्याहितम् आपतितम् इति ब्रुवाणाः सर्वेपि कीचकावरजास्तत्र समीयुः । तेषां ज्यायान् भ्राता यथा शोणितेन तां शालां प्लावयामास, तथा तदवरजा अपि नेत्रजलेन तां प्लावयामासुः । ततस्ते सोदरविपत्तिनिमित्तम् इयम् एवेति रोषरूषितचेतसः कौन्तेयसीमन्तिनीं पिण्डाकारस्थापित-कीचकशवरथस्य स्तम्भदारुणि संदानितां कृत्वा करदीपि-काभिर् दीयमानचङ्क्रमावकाशेन पथा पितृवनम् उपनीय स्वकीयविवेकसम्पत्त्या सह महत्यां चित्याम् अत्याक्षुः । तावद् एषा चकित-चकिता 'हा नाथ ! हा नाथ ! जगत्प्राणभूत ! विपत्-समय-बन्धो ! सम्प्रति कान्तां[1] रसवतीं परिगृह्य मुग्धामिमां कथं न गणयसी'त्युच्चैर-रोदीत् । द्रौपद्या रोदन-ध्वनिर्भीमं त्वरयाहूतवान् । भीमश्च धावति स्म । धावतस्तस्य करे ज्वलदुल्मुकमासीत् । तच्च तदीय-वेगोदित-वात-संपर्कात् संधुक्षितं सद् भृशं दिदीपे ।

१- काम् ताम् इति पदद्वयमपि श्लिष्यते, रसवती-शब्दस्य 'रसोई' (महानसम्) इत्यर्थोऽपि श्लाघ्योऽत्र रसं परिपुष्णाति ।

येन मरकत-मणि-कृत-भित्तिश्यामलेऽप्यन्धकारे स कीचक-भ्रातृषु ज्येष्ठस्य भ्रातुर्वर्त्मनि प्रयापयितुमशकत् । भीम-भुज-बल-प्रेरिताः कीचकानुजास्तस्मिन् गाढे तमसि भ्रातरं मृतमनुसृतवन्तः । आत्मना हत्वा निपातितान् तत्र श्मशान-भूमौ शयितांस्तान् सूत-वंश्यान् कीचकानुजान् दृष्ट्वा भीमो मोदते स्म । हत-शेषा जना गन्धर्वभीत्या पलायन्त । तदा भीमेन कृष्णा बन्धनाद् मोचिता । तौ च परस्परं शौर्यं चातुर्यं च श्लाघमानौ पुनर्विराटपुर-मागतौ । ततः क्षणादेव प्रातःसन्ध्यारुणिम-करम्बितेना-म्बरमणि-बिम्बेन परिचुम्ब्यमाने प्राची-दिगङ्गणे रुधिर-वीची-मुचा पिशित-पिण्डेन कृतानुषङ्गं रंगं विडम्बयति सति सर्वेऽपि पौराः शोक-विकलमनसो राजद्वारे समा-याताः । तस्मिन् समये मण्डली-भूय स्थिताः पुर-नार्यो दिशो व्याप्नुवद्भिर्विलापैररुदन् । परं गन्धर्व-दण्ड-भयात् काचिदेकमपि शब्दं द्रौपदी-निन्दा-व्यञ्जकं नाभ्यधत्त । कीचके हते सर्वे पाण्डवाः क्वचन संकेत-स्थाने एकत्र स्थिताः स्थितिमालोचयन्तो दीर्घं निःशश्वसुः ।

अथ चरोपनीतकीचक-वधवृत्तश्रवणानन्तरं दुर्योधनचित्ते युधिष्ठिरादयोऽवश्यं विराटनगरे सन्तीति निश्चयः सद्य एव जातः । निश्चयानन्तरं कर्णशकुनिभ्यां सभाभवनमागतः स भीष्मादीनात्मीयानित्थमभाणीत्—

भो भो विदितं किं भवतामिदम् । सम्प्रति मात्स्यपुरे कामपि कामिनीं कामयमानः कीचकोपि तस्याः पतिभिरदृश्यैः पञ्चभिर्गन्धर्वैरनुरहसं[1] स्वसंख्यापदा[2]भिधेयमनीयत । तस्यै पुनरपि द्रुह्यन्तस्तदनुजा अपि तथैव पञ्चत्वं प्रमिता इति काचिदियं किंवदन्ती कर्णात् कर्णमधिरोहति । एवं चेदसंशयं सा चतुष्पथमण्डपस्तम्भसालभञ्जिकेव सर्वजनकरपरामर्शभाजनं पाञ्चालदुहिता । तस्याः पतिविडम्बका इति प्रवादभाजस्तेपि पुनरज्ञातवासिनः परेत[3]पतिपवमानपाकशासनाश्विनां पारस्त्रैणेयाः[4] । तेष्वपि द्वितीयेनैव[5] बहुबाहुबलशालिना द्रौपदीद्रुहां निहन्त्रा भवितव्यम् । अहो सर्वत्र विशृङ्खलममीषां दौःशील्यम् । न कुत्रापि ते शान्त्या स्थिताः । सर्वत्रैव विरोधमेवार्जिवन्तः । अत्रैव स्थित्वा वेषान्तरकञ्चुकैः पञ्चभिरकिञ्चनैरेतैर्वञ्चितः खलु वृद्धो विराट इत्यभिधाय दुर्योधनो राधेयेन सह कृतहस्ततालो वल्गद्भुजशिखरमुच्चैर्जहास । त्रिगर्तेश्वरं सुशर्माणं चैवं बभाण—पाण्डवा निश्चयेन विराटपुरे वसन्ति । वयं यदा विराटनगरमवरोत्स्याम-

---

१- एकान्ते । २- पञ्चत्वमित्यर्थः । ३- परेतपतिः यमः । पवमानः वायुः । पाकशासनः इन्द्रः । ४- परस्त्रीणामपत्यानि । ५- भीमेनैव ।

स्तदावश्यमेव ते युद्धरसिकाः स्वाश्रयरक्षाप्रवणाश्च युद्धाय निर्यास्यन्ति। ततस्तान् परिचित्य वयं तान् भग्नाज्ञातवासव्रतान् करिष्यामः। तावत् त्वं पुरोगत्य विराटपुरमवरुन्धि। इत्येवं दुर्योधनेनोक्तः सुशर्मा विराटपुरीमापेदे। तत्र सन्ध्यायां नगरस्य दक्षिणभागे व्यग्रतरसैन्येन तेन सुशर्मणा काल्यमानमुन्नमितलाङ्गूलम्, उद्दामघण्टारवं गोधनं निशम्य सेनाकुम्भिकुलगम्भीरबृंहितारम्भैः वैरिभटजीवितापहरणाय वैवस्वत[1]मिवाह्वयद्भिः केतुदण्डैः परिमोटित्तगगनतटिनीतटविटपिवाटो[2] विराटोपि रणप्रयाणारम्भमाटीकत। तदानीं सभ्या[3] युधिष्ठिरस्य, सूदा भीमस्य, तुरङ्गिणो नकुलस्य, गोपाश्च सहदेवस्य वीर्यप्रकर्षं विराटायाख्यातवन्तः। तं श्रुत्वा विराटस्तान् पार्थान् पुरोधाय सुशर्मणा सह योद्धुमभ्याययौ। यथा वेदमधीयानाः कुशयुक्तकराः पंक्तिबद्धा ओङ्कारव्याहारपूर्वकं वेदाध्ययनमारभन्ते तथोभयपक्षगता अमी योधा मौर्वीरूपान् कुशान् करे कृत्वा पंक्तौ बद्धाः शङ्खध्वनिरूपमोङ्कारमुच्चारयन्तो युद्धरूपं वेदाध्ययनमारेभिरे। युद्धे प्रारब्धे सत्युभयेषां सैनिकानामसिधेनवो ववल्गुः।

---

१- वैवस्वतो यमः। २- परिमोटितः परिवेष्टितः गगनतटिन्याः आकाशगङ्गायाः तटविटपिनां तीरस्थवृक्षाणां वाटो मार्गो येन सः। ३- द्यूतकारकाः।

सुशर्मसैनिका धेनूरपहारयितुं स्त्रासीनचालयन् । विराट-सैनिकाश्च धेनू रक्षितुम् । तत्र युद्धे हतानां गजाश्वरथि-पत्तीनां शोणितैरार्द्रां समरभुवं विलोक्य भूयसा रोषेण संवर्त[1]समवर्तिसममूर्तिर्हृदि नर्तितधूर्तधार्तराष्ट्रशासन-वार्तस्त्रैगर्तः सुशर्मा कैवर्त[2] इव मत्स्यचक्रवर्तिनं विराट-माहर्तुं मुहूर्तादुपावर्तत । अथ मानिनां मुख्योऽसौ सैन्य-सागरमध्यवर्तिनं विराटं झटिति ज्यया[3]त्रपया[4] च सहैव बन्धमनैषीत् । युधिष्ठिरेण शिरःकम्पनद्वारा दत्तामाज्ञां शिरसा बिभ्राणः शत्रुसैन्यानि मर्दयन् प्रसिद्धबाहुवीर्यो भीमो विराटं बन्धनान्मोचयित्वा सुशर्माणं बबन्ध । भीमेन बद्धः सुशर्मा दयापरवशेन युधिष्ठिरेण विराटमनु-नीय मोचितः । तदनन्तरमसावर्धावशिष्टया स्वसेनया सह यथागतं निवृत्तः । सुशर्मसेनासु गतासु विराटस्य सेना भीमं विलोकमाना जाते चन्द्रोदये मत्तगजदन्तप्रतिबिम्ब-नशतगुणिताभिश्चन्द्रिकाभिः क्षपितयुद्धश्रमा सती बन्धनमुक्ततया प्रसन्नानां गवां स्वतः क्षरितया क्षीरधारया शीतलीभूतवालुकायां पदव्यां शयाना रेणुभारेण पक्ष्म-स्थितेन निमीलितनेत्रा तां निशामत्यवाहयत् । अन्यस्मिन्न-

---

१- संवर्तः प्रलयः तत्र काले वर्तमानो यः समवर्ती यमः तत्समा तत्सदृशी मूर्तिः यस्य सः । २- धीवर इव । ३- मौर्व्या । ४- अन्यतो लज्जया च । लज्जा सापत्रपान्यतः ।

ह्नि सूर्योदये जाते दुर्योधनो युधिष्ठिरं द्यूते पराजित्यापहृतामेकां गोत्रां पृथिवीं धारयन्नपि विराटादपरां गोत्रां गोराशिं हर्तुं ससैन्यो विराटपुरमायातः। दूरादागच्छन्त्यत एव श्रमनिःसहाङ्गी दुर्योधनसेना विराटनगरस्थिताभीरवाटस्य समीपे समागत्य स्थिता। तावत्तस्य पादातं[1] सर्वाभिसारेण गाहं गाहं गवां व्रजं व्रजगृहे[2] प्रजगृहे[3]। ताड्यमाना अपि गाव एकस्माद् घोषाद् व्रजाख्यान्महता प्रयत्नेन निर्गच्छन्ति स्म। यतस्ताः पयोधरभारपीडिता आसन्। अपरो घोष आर्तनादस्तु तासां यत्नलेशं विनैव निःससार। यथा दक्षिणाङ्गे जातोऽर्धाङ्गवातो रोगो भिषजा शान्तिं नीतः सन् वामाङ्गे प्रादुर्भवति तथैव भीमेन दक्षिणभागे शान्तिं गमितः कौरवबाध उत्तरभागतो मत्स्यपुरमाचस्कन्द। गोषु ह्रियमाणासु सतीषु कोपि गोपयुवा वेगेन गत्वा राजपुत्रसभायां स्खलिताक्षरा वाच उच्चारयन् गोहरणवृत्तं राजकुमारायोत्तराय निवेदयामास। तच्छ्रुत्वा मणिस्तम्भाधारेण सुखासिकया स्थितो राजकुमार उत्तरः कोपाभिनयाय किंचिदुत्थितः सन्निमां गिरं व्याजहार—अस्मिन् समये शत्रुभिः सह संग्रामं कर्तुमिच्छतो मम यदि कश्चिदुपयुक्तः सारथिः स्यात् तदाहं स्वीयमेतं भुजं तथा



१- पदातीनां समूहः। २- गोशालायाम्। ३- निजग्राह।

विक्रमयेयं यथा मां षष्ठं पाण्डवं तर्कयन्तस्ते कौरवा अतिमात्रं भयं भजेयुः। उत्तरवाक्यं श्रुत्वा हसन्त्या केशसंस्कारं कुर्वत्या सैरन्ध्र्या प्रेरितोत्तरा नाम राजपुत्री तथा विकत्थमानाय स्वभ्रात्रे 'मम बृहन्नला साधु सारथ्यं कर्तुं क्षमते, इत्यभिधाय बृहन्नलामानीय चोत्तरस्य पुरः स्थापितवती। तत्रागतो बृहन्नलारूपोऽर्जुनः स्वाश्रयप्रद-नृपपुत्रमुत्तरं सत्कर्तुं स्वं शिरो नमयामास। स्त्रीणां प्रसादं जनयितुं च किमप्यनुक्त्वैव कवचं पर्यधत्त। उत्तरोपि तं दृष्ट्वा यथा ब्रह्माणं सारथिं कृत्वा शिवो हास-मात्रेण त्रिपुरासुरसैन्यमधाक्षीत् तथाहमपि फाल्गुनमिमं[1] सारथिपदे लब्ध्वानायासं कौरवसेनां ध्वंसयिष्यामीति विश्वासमभजत। युद्धाय संनह्यन्तं तमुत्तरमुत्तरोत्तरं कुतूहलिन्यः कन्याः कौरवेभ्योऽपहृत्यास्मदर्हाणि वासांस्यवश्यमस्मदर्थमानेयानीत्ययाचन्त। पुष्पं वर्षन्त्यो लाजानवकिरन्त्यश्च ललनाः प्रेप्सितद्विषद्वस्त्राणां मूल्य-मिव स्वामाशिषं राजपुत्राय वितेरुः। ततो युध्यमानजन-चित्रपूरितां रथ्यां पश्यन् उत्तरो रथे निबद्धान् घोटान्तु[2]-दन्तीं पोटामर्जुनं[3] पुरस्कृत्य पुरात् प्रतस्थे। तदानीं

---



१- फाल्गुनः अर्जुनः। २- अश्वान्। ३- स्त्रीपुंसलक्षणा पोटा।

दक्षिणदिङ्मुखादुदयमानः पवमानो विराटकुरुनन्दनयोः[1] स्यन्दनसमीपे मन्दं मन्दमस्यन्दत। नगराद् बहिर्गमना-नन्तरमुत्तरेणार्जुनेन चाब्धिरिवागाधमनुत्तरं स्फुरदव-रोत्तर कौरवाणामनन्यसामान्यं सैन्यमदर्शि। तत्रारि-सैन्यमवलोकितुरुत्तरस्य निजवेश्मनीव रणेपि स्त्रीयोष्ठि-काजनि। यतस्तच्चित्तं भीरानशे। नयनमश्रुलहरी बुद्धि मूर्छा। वपुश्च वेपथुरुजेति। प्रबलां त्रिपुलाममूं कौरव-चमूं निभालयत उत्तरस्य हृदि संभूतः प्रभूतस्त्रासः क्रमात् षण्णामृतूनां चरितं चकार। उत्तरो युद्धाद् भीतो भयेन यद् गद्गदं कुरवं[2] अकरोत् तदेव कुरवकपुष्पोदय-रूपं वसन्तचरितम्। यत्तदीयमुखशोषोऽजायत तदिदं जलशोषणात्मकं ग्रीष्मचरितम्। यदक्षि वाष्पमवर्षत् तदिदं वृष्टिरूपं वर्षर्तुचरितम्। तदीयां भीतिमनुमाय तं हसन्तो धृतराष्ट्रपुत्रा यदगर्जन् तदिदं धार्तराष्ट्राणां हंसविशेषाणा-मारवरूपं शरदृतुचरितम्। यदसौ धनञ्जयस्य पादग्रहम-करोत् तदिदं धनञ्जयाख्यस्य वह्नेः स्थानसेवनरूपं हेमन्त-चरितम्। यदन्तर्बहिश्चाकम्पत तदिदं शिशिरचरित-मिति। अथ रथादवप्लुत्य पुरं प्रति पलायमानोऽसौ

---

१- नन्दनशब्द उभयत्रान्वेति। विराटनन्दनः कुरुनन्दनश्चेति। उत्तरार्जुनयोरित्यर्थः। २- कुत्सितं शब्दम्। अर्थान्तरे तु कुरव एव कुरवक: वृक्षविशेषः।

पश्चादनुधाव्य कचेषु गृहीतवते फाल्गुनाय फल्गुना कण्ठरवेण प्राचीनलेख्यमिव प्रमुषितार्धवर्णं वच एवमवोचत्—हन्त बृहन्नले ! त्वं किं चिकीर्षुरसि। इमानि कुरुबलानि ममाक्ष्णोर्न मान्ति। सद्यो रथं निवर्तय। कृतं समरेण। अहमवशिष्टमायुर्निजगृहेष्वेव नेष्यामि। मम प्राणानां यदि महत्त्वं वेत्सि तर्हि मां पलायितुमनुमन्यस्व। मम कोशगृहे यावन्ति सुवर्णधनानि सन्ति तावद्भिर्मम माता त्वामभिषेक्ष्यति। चित्रगतं युद्धमालोक्य युद्धमीदृशमेवारक्तपातं भवतीति प्रतीत्याहमत्रागतः। परं चित्रयुद्धेऽवर्तमाना वीरनादगजाश्वशब्दा मां व्यामोहयन्ति। यथाहमकुण्ठोत्कण्ठयोन्नतं रथमारूढवांस्तथैव मम प्राणा अधुना कण्ठदेशमापद्य बहिर्निर्गन्तुमीहन्ते। इति बहु विलप्य पादयोः प्रणिपतन्तं तं नृपसुतं पृष्ठदेशे करपुटेन मुहुरास्फालयन् सस्मितं गिरममर्त्यपतिसुतोऽर्जुनः प्रवर्तयामास—हे भद्र ! यस्त्वत्पिता विराटो वृद्धः सन्नपि शत्रुसैन्यं साक्षात् करोति तस्य पुत्रस्त्वं कथमीदृशः कातर उत्पन्नः। आकरे पद्मरागाणां जन्म काचमणेः कुतः। सारथौ मयि निर्भये सत्यपि रथस्थस्त्वं यदि युद्धे शत्रुभ्यो बिभेषि तदा तव पितृकुले मातुलकुले चोत्पन्नानां बाहु-

१. निःस्वरेण।

वीर्यशालिनां राज्ञां महदयशो जायेत । त्वत्पलायनादधिकं तदकीर्तिकरं न संभवति । त्वां युद्धात् पलायितं कम्पमानवपुषं च दृष्ट्वान्तःपुरस्त्रियः प्रोच्चैर्हासं करिष्यन्ति । युद्धात् परावृत्य गते त्वयि, उत्तरासख्यस्तां तव भ्राता कियत्परिमाणं शत्रूणां वस्त्रमपहृत्यानीतवानिति यदा प्रक्ष्यन्ति तदोत्तरा किमुत्तरं दास्यति । मानिनी सा मानभङ्गेन कथं निर्वचना सती स्थास्यतीति मह्यं त्वमाख्याहि । तव पिता वृद्धः, सहायकतया संभाव्यमाना मातुलाः कीचकाः सम्प्रत्येव नाशं गताः । तदस्यां स्थितौ सहायकाभावेन यदि त्वं समरे दृढतां नावलम्बसे तदा त्वदीयं राज्यमिदं स्थिरत्वं नोपयास्यति । वीरभोग्यत्वाद् वसुन्धरायाः । अतस्त्वया स्वराज्यं रक्षितुं युधि धीरत्वमवलम्बनीयम् । तदिदं साध्वसं[1] विजहीहि । पाणौ कुरुषु च तृणतां[2] कुरु । तव मत्स्यपतेस्तु वाहिनी[3]-मुखभागे वलगनमेव युक्तम् । इत्याश्वास्य पितृवनाटवी[4]-तटमुपेत्य शमीविटपिकोटिसमाटीकितकिरीटशङ्ख[5]-चापनिषङ्गो जयलक्ष्मीपरिणयन योग्यतांसम्पादयितुमिव

---

१- भयम् । २- तृणतां धनुः, तृणत्वं च । तृणता चापं धनुरिति पर्यायाः । ३- वाहिनी सेना, नदी च । ४- पितृवनं श्मशानम् । ५- शमीतरुशिखराद् गृहीतं किरीटादि येन सः ।

खण्डितषण्ढभावो[1]ऽयमाखण्डलसुतोर्जुनः स्वस्वरूपपाण्डवत्वार्जुनत्वादिव्याख्यानद्वारा शतधा पल्लवितोत्साहेन तेनाहितसुदेष्णास्तनोष्णं[2]करणरणोष्मणा जिष्णूष्णीषधारिणोत्तरेण परिकल्पितसारथ्यं रथमधिरुह्य क्षणेन सपत्नसैन्यस्य सम्मुखीनो बभूव । अपारं कौरवबलं पश्यन्नर्जुनः करवर्तिनि निजधनुषि वक्रां दृशं निदधे । यद् धनुः पार्वत्या स्नेहार्द्रवसनखण्डन्यासेन चिकित्सितव्रणयुक्तमस्तकः शिवोऽप्यश्लाघत । ततोऽर्जुनशङ्खध्वनिमाकर्ण्य कौरवाणां चतुरङ्गमपि बलमस्वस्थमजायत । वामेन पाणिनादाय दक्षिणेन मौर्व्यामारोप्यमाणायां गाण्डीवं धनुः शब्दं कृत्वा गन्धर्वयुद्धादारभ्येदानीं यावत् स्वीकृतं मौनव्रतमभनगिव । अथ करतलद्वयमण्डपकृतताण्डवस्य गाण्डीवस्य विस्फारेण पाण्डवोऽयमिति निश्चित्य बीबानिस्तीर्णदुस्तरसन्धासिन्धुरयं[3] पुनरपि निर्बन्द्धु[4]मागत इत्यधृष्यया निजेर्ष्यया रूक्षा विपक्षा दुर्योधनादयः पूर्वपक्षाः सिद्धान्तमिव युद्धाय तं पर्यवारयन् । यथा परीक्षित्पुत्रेण जनमेजयेन सर्पवधकाम्यया यज्ञे प्रारब्धे भीषणाः सर्पा मन्त्रबलाकृष्टाः सन्तो वेदिमध्ये न्यपतन्

---

१- षण्ढः क्लीबः। पोटात्वमिति यावत् । २- आहितो निष्पादितः सुदेष्णाया निजजनन्याः स्तनयोरुष्णंकरणः उष्णत्वसम्पादकः रणस्य ऊष्मा येन सः । ३- सन्धा प्रतिज्ञा । ४- निग्रहीतुम् ।

तथैवार्जुनरथस्य मध्ये भीषणाः परःसहस्राश्च विपक्षबाणाः पतितुमारभन्त । अर्जुनोपि स्वबाणानां श्मशानवासपापप्रक्षालनाय शत्रुशोणितनद्यां स्नानमिव कारयन् भीषणं युद्धमारब्धवान् । तेन कर्णान्तपर्यन्तमाकृष्य विसृष्टैर्बाणैरुत्तरा दिगपूर्यत । कौरवाणां गवाहरणविषयाशा चाभज्यत । चक्रीकृतगाण्डीवेन तेन बाणानां कदा निषङ्गादादानं, कदा च धनुषि संधानं कृतमिति लोका न विदुः । केवलं मोचनमेव विदुस्तेन प्रतीयते आद्ये द्वे क्रिये तृतीयक्रियया सह सायुज्यमिवाप्ते इति । अर्जुनो बाणैः करिणां शुण्डादण्डांश्छित्त्वा भूमावपातयत् । श्वेतकृष्णपिङ्गलासु नदीषु ब्रह्मणा रचितास्वपि रक्तवर्णाया नद्यास्तेनानिर्मितत्वेन तां त्रुटिमपाकर्तुमिवार्जुनः स्वबाणै राज्ञो निपात्य शतं शोणितनदीः प्रावाहयत् । रक्तनदीप्रवाहानन्तरं युधि कर्णः क्वेति गवेषणस्य विषये, शकुनौ युद्धस्थलादपसर्तुं धृतदिग्भ्रमे, दुर्योधने छिन्नातपत्रे, द्रोणे विनष्टरथपताके, तत्पुत्रेऽश्वत्थामनि भग्नशरासने, भीष्मे च मूर्छिते सति प्रबलाप्यखिला कुरुसेना नष्टोत्साहा जाता । तदनन्तरं देवैरभिनन्दनार्थं कृतकुसुमवर्षस्य पार्थस्य प्रस्वापनास्त्रप्रभावेण

कौरवाणां सकला सेना निद्रालीढदृष्टिरजनिष्ट । एवं बीभत्समाचरन् स बीभत्सुर्द्यूतभासमानीतनिजवधूपरिभवानुरूपफलप्रदित्सयेवोत्तरेण सारथिना द्विषतामपहारितविविधपरिधानो गुरुप्रभृतिष्वमीषु दिवास्वापदोषो मा प्रसाङ्क्षीदिति कृपया मन्यमान इव पुनरपि तदस्त्रं क्षणादेव संजहार । प्रस्वापनास्त्रसंहरणानन्तरं कुरुसेना प्रबुद्धा जाता । पुरा युधिष्ठिरादिषु वने वसत्सु स्ववैभवप्रदर्शनेच्छया दुर्योधनः ससैन्यो गोष्ठावलोकनव्याजेन यात्रामकृत । तत्र यात्रायां तदभिप्रायाशुद्धि ज्ञातवतेन्द्रेण प्रहिता गन्धर्वास्तमबध्नन् । पश्चादर्जुनो[1] युद्ध्वा तममोचयत् । तस्यां यात्रायां तु बन्धनमेव जातमत्र तु वस्त्रापहरणमप्यभूदिति ततोपीयं यात्रा दुःखदेति मन्ये दुर्योधनोऽमन्यत। युद्धे नग्नान् नृपान् दृष्ट्वा लज्जार्तानां देवबालानां पुरस्ताद् द्वयी गतिः । मुखं परावर्तयेयुरक्षि वा निमीलयेयुः । तत्र पृष्ठदेशे युद्धावलोकनागतदेवसंमर्दैन मुखपरावर्तनमशक्यविधानं, तस्यां स्थितौ नेत्रनिमीलनमात्रमुपायस्तदपि च नेत्राणां निमेषशून्यतया विधातुमशक्यम् । तेन ताः स्त्रीयमनिमिषनयनत्वं निनिन्दुरिव । यथा कोपि स्त्रिया कृतां रतिमुद्रां नग्नया तन्वा विवृणोति तथैवार्जुनकृतानादरचिह्नानि विवाससा वपुषाभिदधानाः

[1] अर्जुनः ।

कौरवाः पताकावस्त्रखण्डानि कौपीनतया परिधाय स्वां राजधानीं प्रति परावर्तन्त। तदनु हरिदङ्गणविशृङ्खल-विश्रमितविजयशङ्खरवोऽर्जुनः पुनरपि पितृवनमुपेत्य तरुनिहितशस्त्रसंभारः क्लैव्यसारथ्याभ्यां भूयः कृतानुषञ्जनो भूमिंजयमुत्तरमेवं जगाद—हे कुमार! त्वमस्तव्यस्तं स्वं केशपाशं संयमय। कपोलादौ जायमानामश्रुजलरेखां प्रक्षालनमर्दनादिनापनय। निजे भुजे निषङ्गसहितं धनुर्निधेहि। कौरवेभ्योऽपहृतानां वस्त्राणां राशेरुपरि चास्स्व। सर्वथात्मानं रथिनं प्रदर्शय। धैर्यं बधान। बन्धुगोष्ठ्यामात्मानमेवारिजयस्य हेतुं ब्रूहि। मातुः पितुर्वा मन्त्रिणां वा पुरस्तान्मम वास्तवं स्वरूपं सूचितमपि मा सुसूचः इति। अथ तथेत्यभ्युपगम्य शताङ्गेन[1] पथि गच्छन् उत्तरो राजकुमारः कुरुकुलजैत्रो[2]ऽयमिति विस्मयबलविस्फारितेन चक्षुषा बृहन्नलामप्यनादृत्य मुहुर्मुहुरापिबद्भिः पौरैरनुगम्यमानो नलकूवर इवालकां स्वां नगरीं प्रविश्य परस्परोपमर्दनद्विगुणितवन्दि[3] वादित्रघोषेण महता राजमार्गेणोपलक्षितः पितुर्विराटस्य सभामभिजगाम। सभायामागत्य प्रणतं कुमारमुत्तरं पिता विराटः सुशर्मकृतबन्धनखिन्नाभ्यामपि

१- रथेन। २- जयनशीलः जैत्रः। ३- वन्दिनः स्तुतिपाठकाः।

बाहुभ्यां दृढमालिंग्य सभाजितवान् । पार्थोऽपि कौरवेभ्यो-ऽपहृत्यानीतं पट्टांशुकं रथस्याभ्यन्तरादुपानीय स्वसुतस्याभिमन्योः पाणिग्रहणार्थं देयं वस्त्रविशेषमिव पितुः पार्श्वे स्थितायै राजपुत्र्यै उत्तरायै ददौ । अर्जुनेनोत्तरायै दत्ताद् वस्त्राद् भिन्नमखिलमपि वस्त्रमुत्तरः सुदेष्णामारभ्य दासीपर्यन्तं सर्वेभ्योऽन्तःपुरस्थलोकेभ्यो वितीर्णवान् । परं नानापटोत्पादकतया प्रथितमध्यायै मलिनं वासो वसानायै सैरन्ध्र्यै तन्न ददौ । विराटः स्वपुत्रमुत्तरं निजासनार्धे विन्यस्य चिकुरेषु जिघ्रन्नेवमूचे—हे वत्स ! त्वमतिप्रबलं कौरवबलं कथमेककोऽवधीः । कथ तेषामतिभीषणास्त्वं शत्रुर्जातः । आश्चर्यजनकोऽयं तव जयः । तस्मिन् युद्धे बृहन्नलारूपसारथे रक्षणं यदि त्वया न कृत स्यात् तदा सम्प्रत्युत्तराया अन्यस्य गुरोरन्वेषणं कर्तव्यं स्यात् । कन्याप्रार्थितं च वस्त्रं भूयस्त्वया समानीतमिति महान्त-मानन्दं मे जनयति । इति प्रमोदचञ्चलेन पाणिना परामृश्योत्तमाङ्गं[1] पुनः पुनरनुयुञ्जानाय ताताय वाङ्नदीष्णः[2] सौदेष्णेय[3] उत्तरोऽप्यनुत्तर[4]मुत्तरमेव-

---

१- उत्तमाङ्गं शिरः २- वाक्कुशलः । ३- सुदेष्णायाः पुत्रः । ४- अविद्यमानमुत्तरमुत्कृष्टं यस्मात् तदनुत्तरम् । अनुपममित्यर्थः ।

भुज्ञगार—हे तात ! मया शत्रूणामग्रतो रोदः[1]प्रसारि ध्वनितं[2] चक्रे । यावान्मे वेषसंनाहस्तावांस्तत्र प्रदर्शितः । तस्मिन् रणेऽहमेक एव परैरननुष्ठितां[3] रथिसारथिपत्तित्वे कर्तृतामररचम् । किं बहुना, तत्राहवेऽरातिविघातविषये मम कर्मापार्थं[4] नासीत् । अहं पुरो विजयमाधाय[5] पुनरिमां पुरीमागामिति । तादृशीं तस्य वचनचातुरीं निशम्य युधिष्ठिरे दुरोदर[6]विहारप्रहारवेदनामप्यविगणय्य तरलितेव शिरसा श्लाघमाने सति वासरविरामशंसिनं यामशङ्खरवमाकर्ण्य यथोचितं सभास्तारान्[7] विसृज्य च मेदिनीपतिर्विराटो मोदेन सुदेष्णाप्रासादमाससाद । कीचकसंज्ञकनिजभ्रातृमरणेऽतिबाष्पपातेन शुष्केष्वपि सुदेष्णानेत्रेषु तदानीं विजयिपुत्रदर्शनेनानन्दाश्रुप्रवाहः प्रादुरासीत् । एतावताऽन्हेहसा पाण्डवानां वार्षिकोऽज्ञातवासावधिरपि सम्पूर्णः सम्पेदे । अन्येद्युरात्मजमुखादमीषां याथार्थ्यमवगम्य चकितचकितो विराटः कुटुम्बेन सह सचिवान् पुरस्कृत्य सभामागतः स्वैः स्वैर्वेषैः प्रकृतिमापन्नेन सोदर्यजनेन समुपास्यमानस्य युधिष्ठिरस्य चरणयोः

---

१- द्यावापृथिवीव्यापि । २- शब्दः रोदनं, चेति ध्वन्यते । ३- अन्यैः, शत्रुभिश्च । ४- व्यर्थम्, अर्जुनरहितं च । ५- जयलाभम्, अर्जुनं च । ६- दुरोदरं द्यूतम् । ७- सभास्तारान् सभ्यान् ।

स्वं श्वेतकेशं शिरो न्यस्तवान्। विराटे चरणप्रणते सति हसन् धर्मराजः स्वमनसो नीरागत्वव्यञ्जनेनार्जुनस्य कोपं विराटस्य भीतिकृत मनोमालिन्यं च दूरीचकार। युधिष्ठिरप्रसादेन भृशं प्रमुदितो मत्स्यदेशाधिपतिर्विराटो महितेऽह्नि समस्तप्रशस्तबान्धवैः सह भगवति श्रीकृष्णेऽपि समायाते सति शिरीषकुसुममृद्वीं स्वां दुहितरमुत्तरामर्जुन-सुतायाभिमन्यवे विवाहविधिना पत्नीत्वेन प्रादात्। विराटकृतस्वागतसत्कारग्रहणानन्तरं श्रीकृष्णः पाण्डवान् विविधैरालापैरुल्लास्य नन्दनाद् वसन्त इव विराटनगरात् प्रस्थितः स्वं धाम जगाम।

अथ युद्धेन भुवमधीनां कर्तुं युधिष्ठिरेणाहूता राजानो यथा मेघदिवसा मेघैः सह पर्वतभुवमा-गच्छन्ति तथैव मत्तैर्गजैः सह विराटनगरीमागमन्। युधिष्ठिरः सप्ताक्षौहिणीः तथा दुर्योधन एकादशाक्षौहिणीः सेनाः संगृहीतवान्। युधिष्टिरेण स्वपक्षे युद्धाय निमन्त्र्य-माणः पथ्यागच्छन् शल्यो नाम माद्रीभ्राता कपटपटुना दुर्योधनेन प्रच्छन्न सत्कृतः सन् दुर्योधनस्य सहायतां कर्तुं प्रतिज्ञातवानिति मार्गवृत्तं कथितवते शल्याय युधिष्ठिर उक्तवान् यद् हे मातुल! त्वं यथाप्रतिज्ञं दुर्योधनस्य सहायतां कुरुष्व। मम न तत्र किंचिद् वचनीयमस्ति। परं कर्णस्य हृदयं कटुवाग्भिर्विभिन्दन् सन् त्वं शल्यत्वं

प्रमापय । शल्यं हि भेदनाय भवति । त्वमपि कटुवाचा कर्णस्य मर्म भित्त्वा निजं नाम सार्थकीकुरु इति। भागिनेयेषु वत्सलतया सत्यसंगरः शल्यो दुर्योधनपक्षगतोऽप्यहं कर्णस्य हृदयं कटुवाग्भिर्भेत्स्यामीति प्रतिश्रुत्य दुर्योधनान्तिकं ययौ । तदनन्तरं कृष्णं युद्धे सहायकतया वरीतुं युधिष्ठिरेणाज्ञप्तोऽर्जुनो द्वारकां प्रतस्थे । तत्र चिरदृष्टस्य कुरुकुञ्जरस्य[1] कुञ्जर[2]कुमारकोमलचङ्क्रमविलासस्य तस्य विलोकनाय वीथीषु जनाः सघीबभूवुः । अयमेवार्जुनोऽसौ यः कपटयतित्वमास्थाय सुभद्रामहरद् इति मनसि विभावयन्त्यो गवाक्षमार्गादर्जुनं वीक्षमाणाश्च द्वारकापुरनार्यः सहासमुखा अजायन्त । अर्जुनः शयानस्य भगवतः पाददेशे गत्वोपविष्टः । दुर्योधनस्त्वर्जुनागमनात्पूर्वमेव कृष्णं युद्धे साहायकं याचितुमागत्य तच्छिरोभागे स्थित आसीत् । तत्र स्थितोऽसौ भगवत्कचकौटिल्यस्वमनःकौटिल्ययोस्तारतम्यं परीचि[3]क्षिषुरिव प्रतीयते स्म । ततः प्रबुद्धेन भगवता कृष्णेन तयोः क्रमेण प्रथमाभ्यागमन[4]दर्शनाभ्यां कृत्यसाम्यं[4] मनसिकृत्य रणाङ्गणे गृहीतहेतीनां नवकोटिसंख्यावतां गोपकुमाराणां राशिना

---

१- कुरुश्रेष्ठस्य । २ हस्तिशिशुवत् कोमलभ्रमणविलासवतः । ३- परीक्षितुमिच्छुरिव । ४- दुर्योधनस्य प्रथममागमनं, अर्जुनस्य च प्रथमं दर्शनम् । ताभ्यामुभयोः कृत्यस्य सहाययाचनस्य साम्यम् ।

नारायणी सेनेति प्रथितेन केनचिदंशेन दुर्योधनः सन्तोषितः। विनैवास्त्रग्रहणं स्वोपस्थानेन च केनचिदंशेनार्जुनः सन्तोषितः। एवं परिपूर्णमनोरथौ दुर्योधनधनञ्जयौ स्वावासकटकभुवमासेदतुः। द्वारकातः परावर्तमानौ कृष्णार्जुनौ विराटपुरसमीपदेशमासाद्य युद्धोद्यतसेनादर्शनेन महान्तमानन्दमनुबभूवतुः। कृष्णे द्वारकातो विराटपुरमागते सति धृतराष्ट्रो युद्धविषये पाण्डवानामुग्रमुत्साहं संजयान्निशम्य भृशमकम्पत। युधिष्ठिराय विभज्य धरां दित्सोर्धृतराष्ट्रस्य सशान्तिवचनं हितोपदेशं दुर्योधनः कर्णे न चकार। प्रत्युत कर्णेन सह दुर्मन्त्रणमेव विदधे। युक्तमेवोक्तमभियुक्तैः—परेतकल्पा[1] हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् इति। तदनु दिने-दिने समुपचीयमाननानाविधनरपतिकुलचतुरङ्गबलकलकलमप्यभिभवद्भिः कङ्क[2]काकसालावृक[3]जम्बुकरटितैः कटूकृतनिकटतयोर्हस्तिनापुरमत्स्यपुरयोः सतोः कतिपयदिवसैरेव पञ्च खलु वीराः कौरवसाम्राज्यलक्ष्मीमभिवीक्ष्य स्थातुमवशिष्येरन् इति किंवदन्त्यां प्रस्फुरन्त्यां क्षितिपतिर्युधिष्ठिरोऽपि[4] युधिष्ठिरः क्षीणधैर्यो दीनाक्षरेण

१- मृततुल्याः। २- कङ्कः जलचरपक्षिविशेषः ३- सालावृकाः श्वानः। ४- युधि स्थिरः स्थैर्यमालम्बमानः इत्यन्वर्था संज्ञा। गवियुधिभ्यां स्थिरः इति षत्वम्।

सहोदरसमक्षं सरसीरुहाक्षमेवमाचचक्षे—हे कृष्ण ! भाविनि युद्धे ह्येतावतो बन्धुजनान् निहत्य लब्धयानया भुवा मया किं कार्यम् । सत्यां जीवननिर्वाहोपयुक्तायां सामग्र्यामलं बन्धुसंहारमूलकराज्यलाभेन । बन्धुजन-विघातं विभावयतो मे तालुशोषो जायते । अश्रुधारा प्रवर्तते । दुःखदग्धा तनुश्च कम्पते । मोहादहमानन्दयित्रीं स्वामन्तःक्षमां विहाय बहुदुःखदोग्ध्र्यै बहिःक्षमायै स्पृहयामीत्यहो धिङ्मामधन्यम् । यथा वनाग्निज्वाला-परीताश्रयस्थानस्य हरिणस्य मेघादन्यच्छरणं न भवति तथैव बन्धुविनाशविरुद्धो रक्षार्थं त्वदतिरिक्तं निजजनं समर्थं नाहमवैमि । हे यदुनाथ ! व्यर्थैर्वचनप्रपञ्चैः किं प्रयोजनम् । अहं सत्यं वदामि । यदि त्वं कुरुवंशहितं कामयसे तदा मम भ्रात्रादिभिरापतितमिमं विरोधं शमयित्वा सन्धिं सम्पादय । इति ब्रुवन्तं युधिष्ठिरमचिन्त्य-वैभवो भगवान् यदुनायकः प्रत्युवाच—हे राजन् युधिष्ठिर ! भवता यदुदीरितं तद् भवादृशां महात्मनामनुरूपमेव । महात्मानो हि कुलविनाशं कस्यांचिदपि स्थितौ नाभि-प्रयन्ति । किंतु यो दुर्मतिर्दुर्योधनो भीष्मस्यापि पथ्यं वचनं नाद्रियत स मम कथनात् सन्धये सन्नद्धो भवितेति मम विश्वासो नास्ति । यद्यपि सिद्धिः संशयिता तथाप्यहं प्रयते

प्रयतेन्द्रियैः[1] संस्तुतस्य तव दुर्योधनादिभिः सह सन्धि कारयितुम् । एवमभिधाय भगवान् भीमे हसत्यपि सन्धि विधापयितुं रथमारुह्य गतः । भीमस्तु सन्धिप्रयासस्यानर्थक्यं दुरर्थकत्वं चाभिप्रैति स्म । प्रणतजनेषु दयालुः परजनदुरापश्च श्रीकृष्णः स्वदर्शनागतजनसंकुलां हस्तिनापुरप्रतोलीं पश्यन् विदुरभवनं गतवान् । स्वदर्शनमात्रेण समस्तं पापजातमपहरन् महामहा भगवान् विदुरस्य भवनं प्रविष्टः । भगवति गृहमागते सति स्वस्मिन् सर्वोत्कर्षत्वप्रतीत्या विदुरोऽत्यानन्दनिमग्नो जातः । सायंकालिकं सन्ध्यावन्दनादि कर्म कृत्वा विरतस्य कुन्त्याः पार्श्वे समुपविश्य तास्ताः कथाः कुर्वतो भगवतः सा रात्रिरेव समाप्ता । तदीयाः कथाः पुनरसमाप्ता एव तस्थुः ।

अथ विरतायां निशीथिन्यामिव पृथाकथायां, दीनद्युतिषु तारकाकलापेष्विव प्रदीपेषु, विजृम्भितेषु शकुन्तानामिव वन्दिनां कलकलेषु, विकसितेषु नलिनेष्विव नयनेषु, चञ्चरीकेष्विव पौरजनेषु कुवलयादिव राजमन्दिरात् कमलमिव विदुरमन्दिरमागतेषु विरोचन[2] इव कमललोचनः प्राचीनगिर्यङ्कादिव शयनपर्यङ्का-

१. सुद्धेन्द्रियैः । २. विरोचनः सूर्यः ।

दुत्तस्थौ। सुप्तोत्थितो भगवान् प्रातःकृत्यं समाप्य प्रधानं सन्धिप्रस्तावरूपं कार्यं कर्तुं यथोचितवस्त्रादिधारणं कृत्वा बिदुरमन्दिराद् विदुरेण सह निर्गतः। तदनु द्वारि सविनयमुपागतेन दारुकेण नाम्ना निजसारथिना संयोजित-मणिपादुकः, किञ्चिदवनमितपूर्वकायेण विदुरेण वितीर्य-माणहस्तावलम्बो गुरुकृपप्रमुखैर्ब्रह्मसंघैः प्रतिपाद्यमानां जयाशिषं शिरसा प्रतिगृह्णन् कुशलप्रश्नकोरकितमोदा-भ्यां भीष्मधृतराष्ट्राभ्यां सदनाभिगमनाय सम्प्रार्थ्यमान-श्चिरतरावसरं प्रतिपालयतामक्षौहिणीपतीनामञ्जलि-कमलवनालिमवलोकनेन संभावयमानो भगवान् मुकुन्दो वन्दिवृन्दपरिपठ्यमानकंसादिविजयविरुदावलिप्रबन्धबन्धु-रेण मङ्गलकुसुमगन्धसम्पदन्वीकृतपुष्पंधय[1]झङ्कारसहचर-वादित्रघोषेण कनकवेत्रलताभिराकुलीकृतेन महता राजपथेन दुर्योधनदुःशासनकर्णशकुनिभिरध्यासितपूर्वं सभामण्डपं शनैः शनैरवजगाहे। श्रीकृष्णे द्वारदेशमागते सति दुर्योधनः सर्वैः सभ्यैः सहोदतिष्ठत्। शीघ्रं रत्नमयमासनमानाय्य तमुपवेशितवान्। पुरोहितद्वाराऽर्घ्य-पाद्यादिनिवेदनेन त सत्कृतवांश्च। सभायामवस्थित सातिशयशोभं च श्रीकृष्णमादरातिशयेन पुनः पुनः पश्यतां सर्वेषामेव पुरवासिनां नयनानि मुदं लेभिरे।

१. पुष्पंधयो भ्रमरः।

केवलं दुर्योधनस्य नयने नानन्दतुर्यतोऽसौ भगवन्तं धृतपाण्डवपक्षपातमुद्भावयन् भगवति द्वेषबुद्धिमधत्त। सभास्थिते भगवति सिंहासनादधो लम्बमानं तदीयं पादाग्रं सादरं संवाहयति विदुरे दयमानमनाः श्रीकृष्णः शृण्वत्सु भीष्मादिषु विज्ञजनेषु धृतराष्ट्रं सम्बोध्य समुचितां वाचमित्थमुत्थापयामास— हे भरतर्षभ धृतराष्ट्र ! कियद्भिरेव वासरैर्युद्धे भाविनं समग्रचन्द्रवंशनाशं संभाव्य तव पुत्रैः सह पाण्डवानां सन्धिं सम्पादयितुमहमिहायातोस्मि। यथा गङ्गायमुनयोस्तरङ्गसङ्गमो कल्याणाय जायते तथैव त्वत्पुत्रैः पाण्डवानां सन्धिः समस्तचन्द्रवंशस्य जीवनरक्षायै स्यादित्यतस्त्वं तदर्थं यतस्व। युधिष्ठिरादयो भवदीये पादकमले शतधा प्रणम्य सविनयमेवं भवते विज्ञापयन्ति-वयं वने उत्पन्नाः। भवान् बाल्य एव मृतपितृकानस्मानपालयत्। वयमपि सर्वदैव भवदाज्ञां शिरसा धृतवन्तः। सम्प्रति वयं वनवासाज्ञातवासादिरूपं दुस्तरं प्रतिज्ञासागरं लङ्घयित्वा स्थिताः स्मः। तदिदानीमिदं भवतामेव कर्तव्यं भवति यद् भवन्तोऽस्मभ्यं यथांशं पृथिवीं विभज्य दत्त्वा तत्पालनेधिकुर्युर्वने वास्मान् विसृजेयुः। यो भवानस्माकं वने जातानां बाल्ये परिरक्षणार्थं

धात्री[1] नासीदित्येतदर्थं मनःखेदमनुभवति स्म स एव भवानधुना धात्र्यर्धमपि[2] दातुमिच्छां न करिष्यतीति न संभवति इति। इत्थं ब्रुवाणं यदुनाथं श्रीकृष्णं दीर्घं निश्वस्य धृतराष्ट्रोऽभाषत—हे श्रीकृष्ण! दुष्टोऽयं दुर्योधनो नेच्छति सन्धिम्। अहं तु शतशः सन्धयेऽनुशिष्य श्रान्तोस्मि। अयि मधुमथन! मम माता व्यासेन सङ्गतिकाले यदक्षि मीलितवती तन्ममोपकाराय दयया, नान्येन हेतुनेति मन्ये। तद्दययैव सम्प्रति जन्मान्धतयाहं मूर्खस्य सुतस्य मुखदर्शनात् सुरक्षितोऽधिकमानन्दं वहामि। यदि साक्षि न मीलितवत्यभविष्यत् तदा मम चक्षुष्मत्तया मूर्खसुत-मुखवीक्षणकष्टमप्यनुभवनीयमेवापत्स्यत। अयं मम सुतो दुर्योधनः स्वयमपि हितं नावधारयति। विद्वज्जनस्य भीष्म-विदुरादेरसकृदुक्तां वाचमपि नाचामति। तदस्यां विषमायां परिष्ठितौ केवलं त्वमेवैकः कौरववंशमस्माद् विनाशाद् रक्षितुं क्षमो नान्यः। इति सिद्धान्तितवति बद्धाञ्जलौ राजनि धृतराष्ट्रे तदीयं कथनमनादरेणैवोपेक्ष-माणं सहासं कर्णस्य हस्ते स्वहस्तमारोप्य कृततालं दूषितसन्धेर्दुःशासनस्य वचनमाकर्ण्य शकुनिकृतकर्णोप-

१- धात्री माता। उपमाता च। २- धात्र्याः पृथिव्या अर्धम्। राज्यार्धमित्यर्थः।

जापमाकर्णयन्तं दुर्योधनं भगवानेवं सर्वजनसमक्षमब्रूत-हे पुरुवंशोत्पन्न दुर्योधन ! तव पिता कथयति । पार्थेभ्य-स्तदीया पृथिवी दीयतामिति । तदप्युपेक्षयाऽशृण्वतस्तव जन्म कथं चन्द्रवंशेऽभूदिति नावैमि । न हि विमले चन्द्र-कुले त्वादृशां पितुरुचितमप्यादेशमपालयतां जन्मोचित-मासीत् । तत् कथं त्वमजायथाः । इत्यत्र हेतुं न पश्यामि। पूरुर्नाम पित्राज्ञापालकः तवैव वंशे जातो यो निजपितुर्य-यातेर्वार्धकं गृहीत्वा स्वं तारुण्यं पित्रे दत्तवान् । इदानी-मपि धीरोऽतिगम्भीरोऽयं देवव्रतो भीष्मः शान्तनवः शान्तो नवे वयसि पितृमुदे द्वितीयमाश्रमं तृणवत् त्यक्त्वानायासं गार्हस्थ्यसुखं विजहत् तव पुर एव तिष्ठति । अहो तव पितामहोऽयं महोदयः । इमं प्रत्यक्षनिदर्शनभूतं भीष्ममालोक्यापि त्वया पितुराज्ञावधीर्यते इति महतीयं विडम्बना । शकुन्यादिधूर्तजनोक्तीः कर्णे कृत्वा त्वया कृतो राज्यापहरणमनोरथस्तदा सिद्धोऽभविष्यत् यदि महादेवेन सह युध्यमानेन पार्थेन शिवशिरसि प्रहृतं गाण्डीवं धनुस्ततो न बहिरभविष्यत् । परं तथा न जातम् । प्रसन्नः शिवोऽर्जुनाय तदस्त्रं पुनरदादतस्तस्मिन् हरप्रसादलब्धे दुर्जये गाण्डीवे धनुषि विद्यमाने तवायं मनोरथो न फलिता । त्वं वृथा कलङ्कमर्जयसि । अहं मन्येऽतिविख्याते कुरुकुले प्रथमभागे चन्द्रः कलङ्कभाजन-

मजनि। चरमभागे च भवान् कलङ्की समुत्पन्न इति द्वावेत्र कलङ्किनौ जातौ। भविष्यति कलङ्कीति तु नैव संभाव्यते। सम्प्रत्येव युद्धे कुरुवंशविनाशस्यावश्यंभावित्वात्। छिन्ने मूले नैव शाखा न पत्रम् इति प्रसिद्धेः। साम्प्रतं निजजनैः प्रस्तूयमानं सन्धि त्वं नाङ्गीकरोषि, नेदं तव दूषणम्। किंतु चित्रसेनेन बद्धं त्वां बन्धनान्मोचितवतां पाण्डवानामेव तद् दूषणमिति। पयःपानं भुजङ्गानां केवलं विषवर्धनम् इति सूक्तिमनादृत्य पाण्डवास्त्वां तादृग्बन्धविपदोऽरक्षन्, अत एव त्वं सम्प्रतीत्थं विकत्थसे। यदि ते तथा न व्यधास्यन् तदा कुत्रास्थास्यः इति निगदितवति भगवति क्रोधनो दुर्योधनोऽपि गिरमिमां गरलमिव तरलमुज्जगार—अये नन्दनन्दन! केवलं विराटतनयाश्रयलाभेन कृतकृत्यंमन्यमानानां तेषां कुन्तीभुवाम्, अस्माकं चाक्षौहिणीपतिभिरनुक्षणमावेद्यमानाञ्जलिधोरणी[1]मप्यवलोकयितुमलब्धावसराणां किं वा संधानम्। किं वा तव दूतकृत्यम्। किं वा मया देयम्। ईदृग्विधं मुधायासमवधूय यथागतं गन्तव्यम् इति। तादृशं दुर्वचनं कथयति दुर्योधने धृतराष्ट्रो भीतमनाः कर्णौ पिधाय स्थितः। दुर्योधनस्तु तथा व्याहृत्य भगवति कृष्णे तत्रस्थेऽपि कृतान्तास्यो वेगेन

१- धोरणी पङ्क्तिः।

सभाभवनाद् बहिरयासीत् । तदनु दनुजारातिरेष रोष-स्मितलेशरूषिताधरस्ताहृशेन तस्यावलेपवचनेन भिया विहस्तान्[1] मुदा निरस्तान् समस्तानपि सभास्तारान्[2] पुरस्तान्निरीक्ष्य पुनरपि वाचमेवमुवाच— अधुनैवं सन्धिपराङ्मुखे दुर्योधने राज्ञा धृतराष्ट्रेण किम् ? गाङ्गेयेन भीष्मेणापि किम् ? विदुरप्रोक्तया नीत्यापि किम् ? दूत्यं गतेन मयापि वा किम् ? सम्प्रति युधिष्ठिराय धरित्रीं दातुं भीमस्य गदैव प्रभविष्यति । पार्थस्य चानपार्थाः प्रत्यर्थिकदर्थनसमर्थाः प्रखराः शराः । युद्धादन्यन्नास्ति,साधनम् इति । तादृशीं भगवदुक्तिं निशम्य भीताः सभासदो मूकीभूय स्थिताः । तेषां मूकभावेना-वस्थानमेव भगवदुक्तेः सामूहिकं प्रत्युत्तरमजायत । सभानिर्गतो दुर्योधनो बलाभिमानशालिभिः स्वसहायकैः कर्णशकुनिदुःशासनैः सह विचार्य भगवन्तं श्रीकृष्णं बन्धनं प्रापयितुमैषोत् । दुर्योधनस्य तादृशीं मन्त्रणां स्वप्रभावेण विज्ञाय श्रीकृष्णः कुपितः सन्नेकोपि सर्व-गतोऽसौ मञ्जूषायां स्थितां भूषणावलिमिव स्वोदरे स्थितां सनक्षत्रग्रहमण्डलां सशैलवनसागरां धरां सभासदां दृशोरग्रे समुत्थापितवान् । निजं विराट्स्वरूपं प्रकटीचकार ।

---

१- व्याकुलान् । २- सभ्यान् ।

नवीनदर्पणोपमे तत्राङ्गुष्ठपरिमाणे भगवति श्रीकृष्णे समस्त जगदवेक्ष्य विस्मिताः सिद्धा विद्याधरा देवगणाश्च पुष्पाण्यवर्षन्। मुनयः स्वमज्ञानं तत्यजुः। भीष्मः प्रमोदाश्रु मुमुचे। विदुरो निर्निमेषभावेन पश्यन्नतिष्ठत्। कुरुपुर-वासिलोकश्च दुर्योधनादपरक्तो जातः। जन्मान्धोपि धृतराष्ट्रो विश्वरूपधरस्य भगवतः कृपया दर्शनसामर्थ्यमथ्यं कियतः कालस्य कृते प्राप्य भगवद्विश्वरूपस्वरूपदर्शनेना-त्मानं पावयित्वा च पुनरप्यन्धभावं प्रपन्नः। भगवतो विश्वरूपं दृष्ट्वा भयेन द्रोणभीष्मादिषु हे माधव! निज-मिदं भयंकरं रूपं विसृजेति कथयत्सु सत्सु भगवान् घोरं तद्रूपं विहाय मनोरमं गोपीदृगाकर्षणकार्मणज्ञं रूपं प्रपेदे। ततस्तादृशं निरुपमानं तस्य महिमानमनुभूय भूयश्चरि-तार्थो मुनिसार्थः शान्तमूर्तिं तं प्रणतिपुरःसरमस्तावीत्। वास्तवैः स्तवैः प्रसन्नो हासच्छविलिप्ताधरश्च भगवान् श्रीकृष्णो नववारिदो मेरोः कटकादिव स्वासनादुत्थितः। सभाभवनान्निर्गतश्च परमभागवतं भीष्ममालिलिङ्ग। धृतराष्ट्रस्य पृष्ठदेशमामृशं। इतरान् सोमदत्तादीन् समागतान् कुरून् गन्तुमनुमतिं ययाचे। विदुरस्य शिरश्चिरमाजघ्रौ। ततः पाण्डवाननुध्यायन् मत्स्यपुरीं प्रति रथेन प्रतस्थे। हस्तिनापुरत आयाताद् भगवतः कृष्णात् सन्धयेऽनिच्छतां दुर्योधनादीनामभिप्रायं विज्ञाय वर्धमानरणोद्योगाः

पाण्डवाः स्वमस्त्रगणं समाराधयन् ।

तत्रान्तरे कृत्यविदां पुरोगा पृथा कुन्ती गङ्गातट-वर्तिनि क्वचन कानने तपस्यन्त कर्णमवाप । कुन्त्यामागतायामपि तदागमनसमाचारं कर्णो नाज्ञासीत् । तपस्यासमाहितचेतसस्तस्य बाह्यार्थज्ञानाभावात् । तपस्यावसाने भग्नध्यानावस्थोऽसौ जपमालां कर्णे न्यस्य कुन्तीमपश्यत् । कुन्ती ह्युभयीं पञ्चतां वारयितुं कर्णमनुरुरोध यत् त्वं युधिष्ठिरेण संधत्स्व । एवं सति ते पञ्चत्वं विहाय षड् भ्रातरो भविष्यन्ति । एका पञ्चता त्वेवं परिहृता भविष्यति । त्वयि सपक्षे सति तेषां कुत्रापि पराजयाभावेन द्वितीया पञ्चता मृत्युरपि परिहृतो भविष्यति । अयि वत्स ! त्वं मम पुत्रोऽसि सूर्याज्जातः । राधातिरथौ तु केवलं तव पोषकौ न तु जनकौ । त्वं दुर्योधनसौहृदेन सहैव राधातनयत्वबुद्धिं जहीहि । मम वाक्यमङ्गीकृत्य युधिष्ठिरादीनङ्गीकुरु । तानात्मसोदरभावेन गणय । तेषां पक्षं चावलम्बस्व । भवादृशो दानवीरो यो यस्मै कस्मैचन याचकाय शरीरसंसक्तं दिव्यं कवचमपि दत्ते स यदि मातुः साक्षान्निदेशे विलम्बते तदा कियतो धिक्कारान् प्राप्नुयादिति विभाव्य शीघ्रं मदादेशमनुसरेति । इति कुन्त्यादेशं कर्णः कर्णदेशाध्वनीनं विधाय साञ्जलिना समुचितमुत्तरं बबन्ध—हे अम्ब ! स्याति भोजवंशे गृहीत-

जनुषः प्रसिद्धे कुरुकुले च विवाहितायास्तव कर्तव्यज्ञान-सम्पन्नताऽवश्यं भवेत्। यो दुर्योधनः खल्वङ्गद्वयमेक-मङ्गाख्यं देशमपरं स्वं शरीरं च मदन्वायत्त चकार तस्यातिविश्रम्भभाजनस्य सख्युः सख्यं किं मयोपेक्षणीय-मिति त्वं स्वयमेव भण। सज्जनाः कृतघ्नतामेव परलोक-गतेर्विघ्नं वदन्ति। सा कृतघ्नता यथा मां न स्पृशेत् तथा त्वं मयि दयाद्रुतहृदया भव। इति ब्रुवाणस्य कर्णस्य मनो दुर्योधनान्न निवृत्तम्। किन्तु कुन्त्येव विफलमनोरथा सती कर्णसमीपान्निवृत्ता।

भगवता श्रीकृष्णेन विहितेऽपि हिते महितेऽतिबली-यसि युद्धविरुद्धोद्योगे दुर्दान्तदुर्योधनस्य दुश्चेष्टितं युद्धं विना दुरुच्छेदं विधेरभिमतं मत्वा विधिवदुभयपक्षगता योधाश्चतुरङ्गबलंव्याप्तचत्वराः सत्वरा युद्धाय कुरुक्षेत्रं नाम प्रसिद्धं धर्मक्षेत्रं स्थानमागतवन्तः। यावद् युद्धं न प्रारब्धं तावदेव रथध्वनयो गजबृंहितानि हयह्लेषितानि च दिशो व्याप्तुमन्योन्यं कलहमारभन्त। युद्धागतानां नृपाणां पटमयगृहाणि स्वशिरोभिराकाशमस्पृशन्। मन्ये तानि दूष्याणि सदोषाणि दूष्यरदप्रतिपाद्यानि चाकाशगङ्गा-पयसि स्नात्वा शुचीभवितुमिच्छन्ति स्म। ततः क्षणादेव तत् कुरुक्षेत्रं हस्तिनापुरनगरमिवाभूत। यथा हस्तिनापुरे नानावीथयस्तथात्र कुरुक्षेत्रस्थे सेनासंनिवेशेपि। यथा

तत्र क्रेतारः क्रय्यवस्तुग्रहणे व्यासक्तास्तथात्रापि । यथा च तत्र शस्त्रपरिष्कारस्तथात्रापीति तुल्यत्वमुभयोरजनि। तत्र तावद् दुःशासनाग्रजो भीष्मपितामहमुपेत्य भगवन्! अस्मिन्नुपतस्थुषि वीरभुजविनोदकाले त्व विवाह-विमुखोऽपि मदर्थं प्रत्यर्थिपार्थिवान्निहन्तुं पृतनाधिपत्य-लक्ष्मीमुपयच्छस्वेति विज्ञापयंस्तच्चरणयोः प्रणिपपात। दुर्योधने पादप्रणतिपुरःसरं तथा प्रार्थयमाने प्रसिद्धः शूरो गाङ्गेयो भीष्मः क्षणेन शत्रुभटानुच्चाटयितुं सेनापतित्वम-ङ्गीकृतवान्। पाण्डवा अपि प्रतापिनं रिपुतापिनं धृष्टद्युम्नं सेनापतिमकार्षुः। अथ सदसि महारथपरिगणनकथाया-मर्धरथोऽयमिति भीष्मेण निन्दितपराक्रमः कर्णो यावद्-भीष्मजीवनमहमस्त्रं न धारयिष्यामीति प्रतिज्ञां कृतवान्। इदं प्रतिपद्य खिद्यमानं मानधनं दुर्योधनं भीष्मो वत्स! मा भैषीः। महाभुजानपि द्विषन्महीभुजः संख्येऽसंख्यखरतर-विशिखमुखेन खादयिष्यामि इत्याश्वासयामास। तदनन्तरं धनुर्धराभ्यां भीष्मधृष्टद्युम्नाभ्यामलंकृता उभयेऽपि प्रवीराः स्वं स्वं जयचिह्नं ध्वजादि वहन्तो युद्धं कर्तुं सन्नद्धा बभूवुः। यथा त्रिपुरविजयकाले शिवो ब्रह्माणं सारथिम-कृत यथा वा सूरोऽनूरुं सारथ्ये नियुङ्क्ते तथा गृहीताश्व-दमनकशं भगवन्तं श्रीकृष्णं सारथ्ये नियुज्य रथमारुह्य च वीरोऽर्जुनः समरभुवमवततार। युद्धे भीष्मादिगुरुवधमुदी-

क्ष्यासौ रुदन् श्वासं त्यजन् अधीरश्च संश्वापं विससर्ज।
तत्रार्जुनस्य व्यामोहकाले तं प्रकृतिस्थं कर्तुं भगवताऽवि-
गीता गीता गीता।

मयैवैते निहताः पूर्वमेव, निमित्तमात्रं भव सव्यसाचिन्!

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही॥

'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते'

इत्यादिभिः कर्मयोगोपदेशवाक्यैर्भगवान् श्रीकृष्णोऽर्जुनं गतमोहं कृत्वा तं गाण्डीवचापं पुनरग्राहयत्। भीष्मस्य जयपताकायां श्यामलतालचिह्नच्छविर्यमुनेव प्रतीयते स्म। मन्ये यमुना स्वसख्या गङ्गायाः सुतस्य समरे पराक्रमं द्रष्टुं वियदारूढेति। युद्धप्रारम्भे शूरैः कृतानां सिंहनादादि-शौर्यप्रकाशनव्यापाराणां सूचकाः शब्दान्तरतिरोधायकाश्च भेर्यादिविजयवाद्यध्वनयः सुदूरपथधावनश्रममपनेतुमिव सागरतटस्थपर्वतगुहासु प्राविशन्। युद्धवाद्यध्वनिमाकर्ण्य देवा वीरान् पूजयितुं गृहीतनन्दनवनकुसुमाः शीघ्रमा-काशमुपजग्मुः। यथा विभिन्नवायुप्रेरितौ महाघनौ सेन्द्र-चापौ सशब्दौ च सन्तौ वियति परस्परं मिलतस्तथा

पाण्डवकौरवयोधौ धृतचापौ सगर्जितौ च युद्धक्षेत्रे सङ्गतौ बभूवतुः । तदानीं कस्यचिद् गजस्य परेण योधेन शुण्डादण्डो मूलतश्छिद्यते स्म । तथापि चतुरोऽसौ हस्ती हस्तिपकहस्ततश्च्युतमङ्कुशं स्वदन्तेनोत्थाप्य चतुराय हस्तिपकाय समर्पयति स्म । भस्मधवलौ द्वौ गजौ युद्धेऽन्योन्यस्य मुखे दन्तान् प्रवेश्यास्थितौ दृष्ट्वा शक्रस्यापि विस्मयोऽजनिष्ट । उभयोरपि पक्षयोः पङ्क्तिबद्धेषु स्थितेष्वश्वेषु परस्पराभिमुखौ पूर्वकायमुन्नमयन्तौ चोभावश्वौ स्वस्ववाहौ शस्त्राद् रक्षितुमिवोत्थितौ प्रत्यभाताम् । तत्र युद्धे पञ्चधारा[1]युताश्वसंसर्गेऽपि खड्गधाराऽस्पर्शो विस्मयमावहत् । पञ्चधाराशालिनोऽपि च तत्राश्वस्यैकधाराशालिना खड्गेन वध आश्चर्यमजनयत् । निजास्त्रप्रयोगकुशलाः परस्परसमानयुद्धव्यसनिनश्च भटाः स्वसमानैर्योधैर्युध्यमाना यथैव हन्यन्ते स्म तथैव च घ्नन्ति स्म । ततो धृष्टद्युम्नेन भिन्नमर्माणं कौरववाहिनीं हा हा शब्दं कुर्वतीं दृष्ट्वा भीष्मः पार्थसेनां हन्तुं तन्मध्यं प्रविष्टः । भीष्मेण प्रयुक्ता बाणाः प्रत्येकं सहस्रं गजांस्तावतोऽश्वांस्तावत एव च पदातीन् न्यपातयन् । दलितवैरिणि देवव्रते भीष्मे नेत्रपात्रं गते सति सारथ्यमात्रकरणे कृत-

---

१- अश्वानां धौरितकमास्कन्दितकं रेचितकमित्यादयः पञ्चगतयो धारा उच्यन्ते ।

सङ्गरोपि श्रीकृष्णो न केवलं रथस्य मूले चक्रं नर्तयामास किंतु रथस्य मध्येपि चक्रं सुदर्शनं चालयामास । अर्जुनस्य रक्षार्थं भगवान् रथं चालयन्नेव सुदर्शनचक्रमग्रहीत् । तदनु कल्पान्तरुद्रबन्धुः सुरसिन्धुसूनुर्भीष्मो राज्ञां दशभिः शिरःसहस्रैर्वसुन्धरां बन्धुरयांचकार । अहो आश्चर्यम् । विवाहं त्यक्तवतोपि बालब्रह्मचारिणोपि भीष्मस्याद्भुतयुद्धकौशलेन प्रसन्नानां सुराणां संघात् पुष्पवर्षे सति संतानलाभो[१]ऽजनि । इत्थं भीष्मः सकलमहद्युद्ध्वा सूर्यस्यास्तमये सति प्रत्यर्थिनामिव स्वस्यापि बलापहारं[२] चकार । शत्रुबलक्षयेण सहैव स्वं सैन्यं शिविरगतं विदधे । इति नव दिनानि नवनवानि भुजविलसितानि प्रकाश्य दशमेह्नि तालमात्रं वियदारोहति भगवति विवस्वति भीष्मः समरवर्षासमयशिखण्डिना[३] गाण्डीवधन्वना पुरस्कृतं शिखण्डिनं दृष्ट्वा, स्त्रीपूर्वोऽयम् । अमुना सह न योद्धव्यम् इति निषिध्य हस्ततलनिरस्तधनुर्मध्यः सुदूराक्षिप्तैरर्जुनबाणैरादिवसावसानं विदारितकलेवरतया नितान्ततान्तोपि शान्तमनाः शान्तनवः स्वान्तनिहितरमाकान्तः सुभटलोकसमुचितां शरशय्यां शनैः

---

१- संतानः कल्पवृक्षः सन्ततिश्च । २- बलं सैन्यं शक्तिश्च ।
३- शिखण्डी मयूरः

शनैरधिशिश्ये । पार्थेन क्षितिनिखातपुङ्खानां शराणामुपरि शयानः सन् विरजा विरेजे । वाहिनीसुते तस्मिन् युधि पतिते पाण्डवकौरवोभयपक्षगतापि वाहिनी[1] पतदश्रुः सती प्रथमं महान्तं परितापं पश्चाच्च पटवेश्मानि ययौ । वाहिनी-सुतमृत्युना वाहिन्याः शोकस्य स्वाभाविकत्वात् ।

अपरेऽहनि दुर्योधनः कुम्भयोनिं द्रोणाचार्यं सेना-पतित्वे परिकल्प्य स्वपक्ष्यभूपतीनां पुरस्तात् तमुवाच—हे आचार्य ! यथा कुम्भोद्भवोऽगस्त्यो निजतेजसा विन्ध्यपर्वतं स्तम्भितवान् तथा त्वमपि कुम्भोद्भवः स्वभुजवीर्येण परपक्षगान् राज्ञो निवार्य जीवन्तमेव युधिष्ठिरं वशीकृत्य लज्जानतमुखं पादचारिणं च तं मह्यमर्पयेति । दुर्योधनानुरोधं श्रुत्वा कार्तिकेय[2]पराक्रमो यथोचितज्ञानवांश्च द्रोणाचार्यो वीरमुद्रया बाहुमुत्थाप्य दुर्योधनं प्रत्युवाच—हे नृप ! यद्युपेन्द्रसारथिरर्जुनो नोपेयात् तदा युधिष्ठिरं सकलनृपपरिवृतमपि तुभ्यं समर्पयितुं शक्नुयां परन्तु सत्यर्जुने युधिष्ठिरपरिभवाय न कोपि शक्त इति सर्वास्त्रविद्यानिधानभूते द्रोणे तथा-भिदधाने तत्र स्थिताः सर्वेपि राजानस्तदुक्तिसमर्थने स्वस्व-शिरांस्यकम्पयन् । अथ द्रुपदात्मजो धृष्टद्युम्नो द्रोणश्च

१- वाहिनी सेना नदी च । अत्र [illegible] विवक्षिता भीष्मस्य गाङ्गेयत्वात् । २- कार्तिकेयः कुमारः ।

रथाश्वगजसैन्यसंवृतौ युद्धाय विरचच्छताम्। युद्धवाद्यध्वनि-माकर्ण्यादृष्टपूर्वां द्रोणस्य बाहुलीलामवलोकयितुमाकाशे समुपस्थिता देवयक्षकिंनरसिद्धाः शक्राय मध्ये स्थानं विसृज्य तदभितो व्योमनि तस्थुः। असामान्यपराक्रम-शाली द्रोणो ब्रह्मणः सृष्टिमुपरि शिरोऽधश्च कबन्ध इति प्रतिनियतस्वरूपामधः शिर उपरि कबन्ध इति विपरीतरूपां विधातुमुद्युक्त इव शराभिवर्षेण प्रतिभटभूपालानां कबन्धा-नूर्ध्वं शिरांसि चाधस्ताच्चकार। यथा तीक्ष्णदन्तप्रभा-शलाकाः प्रसारयन् राहुः परिधिमध्यस्थितं शशाङ्कमुपयाति तथा श्वेताश्वयुक्तरथाधिरूढं धर्मराजं ग्रहीतुं बाणवृष्टीः कुर्वन् द्रोणस्तत्समीपं गतः। अर्जुनो यदा युधिष्ठिररक्षार्थमवस्थापितान् भीमधृष्टद्युम्ननकुलसहदे-वादीन् द्रोणाचार्यक्षिप्तबाणाधिक्षिप्तान् विमुखीभूयापसृतान् पश्यति स्म तदा युधिष्ठिरबन्धं संभाव्य कृष्णचाल्यमाना-श्वेन स्वेन रथेन द्रुतमुपेत्य पर्वतो नदीप्रवाहमिव द्रोणं निरुद्धवान्। शिवेन[1] सह युद्धवतोऽर्जुनस्य गुरुणा[2] द्रोणेन सह युद्धेपि प्रवृत्तिरजायत। सर्वोप्युत्तरोत्तरं श्रेयः काङ्-

---

१- शिवो महादेवः, लघुमानविशेषश्च। २- गुरुः आचार्यः, बृहन्मान-विशेषश्चतुराढको द्रोणश्च।

क्षतीति नियमादर्जुनस्य शिष्याख्यलघुमानेन युद्धं कृतवतो द्रोणाख्यबृहन्मानेनापि युद्धेच्छा प्रावर्ततेति युक्तमेव । तदनु सव्यसाचिशरवीचीनीचीकृतभुजदम्भविजृम्भः कुम्भसंभवो द्रोणो भयवशात् परावर्तितमुखतया दत्तपृष्ठैः पलायमानैर्योधैः सह चण्डभानुश्चरमगिरेरिव स्वयमपि कटकसोमानमासीदत्[1] । अन्येद्युर्यदि विजयो[2] नान्यत्र याति तदा युधिष्ठिरनिग्रहोऽशक्यक्रियस्तत् केनाप्युपायेन तमन्यत्र नयेत्येवंविधेन द्रोणाचार्यवचसा प्रेरितस्य दुर्योधनस्य कथने तस्थिवद्भिस्त्रिगर्तैराहूतोऽर्जुनः 'आहूतो न निवर्तेत' इत्यादि प्रशंसावचनैः कृष्णेनोत्तेजितः कुरुक्षेत्रादन्यत्र स्थाने त्रिगर्तैः सुशर्मादिभिः सह योद्धुं गतः । तदार्जुनानुपस्थितौ निर्भीकैः सैन्यैः सह दुर्योधनादयः पाण्डवबलमुपागताः । तस्मिन् दिवसे दुर्योधनानुरोधरक्षार्थं युधिष्ठिरं ग्रहीतुकामतया रन्ध्रमन्विष्यन् द्रोणाचार्यो युधिष्ठिरस्य रथपार्श्वे तद्रक्षाधिकृते सत्यजिति कोपपूर्णे नयने निक्षिप्यार्जुनाभावान्निर्निरोधतयाऽसहाय एव पाण्डवसैन्यमध्ये प्रविष्टवान् । यावद् द्रोणः पाण्डवसैन्यं प्रविशति तावद् बलीयसा संरम्भेण सत्यजित् तेन सह योद्धुं प्रवृत्तः ।

---

१. कटकं सैन्यम्, पर्वतनितम्बश्च । २. विजयोऽर्जुनः ।

चिरं युद्धं कृत्वा च स द्रोणस्य रथयान् हस्तचतुष्टयमात्रं पश्चाच्चालयामास। तेनात्मापमानेन भृशं कुपितो द्रोणः सत्यजितः शिरोऽच्छिनत्। तेन छिन्नेन शिरसा भुवं पतता सहैव युधिष्ठिरस्याश्रु भुवि पपात। तदानीं द्रोणं पुरो विलोक्य युधिष्ठिरो भीत्या कण्ठगतप्राणो जातः। द्रोणो यावत् परसैन्यसागरं चुलुकयति तावदेव भीमादयस्तद्रथ-पार्श्वमुपेत्य तदीयरथ्यसूतादीन् निजघ्नुः। ततस्तादृशं कुम्भसंभवस्याभिषङ्ग[1]मभिवीक्ष्य क्रोधनतया रणमत्तो भगदत्तः समस्तानि हास्तिकानि[2] पुरस्ताद् विस्तार्य सुप्रतीक नाम गजमधिरूढो हठाद् भीममभिदुद्राव। सुप्रतीके समीपमुपसर्पति सति शत्रुसैन्यानि दूरे पलायिषत। भीमस्तु केतून् पातयतो, रथान् श्लथयतो, दन्तावलान् कृन्ततो, घोटान् पाटयतो भगदत्तद्विपान् गदया विभिद्य सुप्रतीकं गजं सर्वकरिमारणेन सहायान्तराभावात् स्वच्छा-याद्वितीयं विदधे। दन्तादिभिः परप्रहारै तदीयरक्तलिप्त-शरीरः सुप्रतीकः पर्वततटे वप्रक्रियायां[3] परिणततया गैरिकलिप्ताङ्ग इव प्रतीयते स्म। सम्मुखमायान्तं सुप्रतीक-

---

१- अभिषङ्गः पराभवः। २- हस्तिनां समूहः हास्तिकम्।
३- उद्दामकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते। तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः।

मवेक्ष्य कम्पमानमानसो भीमस्तदग्रतः पलायामास । ततः सुप्रतीकसंक्षुभितनिजध्वजिनीकोलाहलसमाकर्णनाकुलमानसो वासवसूनुरर्जुनो हतशेषाणां त्रिगर्तसेनानां निरासाय प्रयुज्यमानस्य वायव्यास्त्रस्य वेगार्धं स्वरथाय ददाविव तूर्णं रणस्थलमागत्यापारभुजवीर्यगर्वितौ द्रोणभगदत्तौ विरुध्य चिरकालपर्यन्तं युद्धं कारयामास । सुप्रतीकेऽर्जुनस्य रथं विदलय्य तदीयमुत्साहं ह्रसयितुं प्रवृत्ते सति कृष्णस्तथा तन्मार्गादन्यतो रथं गमयामास यथार्जुनरथः सुरक्षितोऽतिष्ठत् । एवं तस्य करिणस्तादृशो मनोरथ एव भग्नो जातः । भगदत्तेन पार्थस्य वधाय प्रेरिता शक्तिः पथ्येव पार्थशरैर्निर्मथिताऽपार्थाऽभूत् । शक्तौ भग्नायां भगदत्तोऽर्जुनवधाय वैष्णवमस्त्रममुञ्चत । तच्चास्त्रं भगवान् कृष्णः स्वहृदयेन प्रतीष्टवान् । फल्गुनापरपर्यायस्यार्जुनस्य रथं विभिद्य त फल्गुतां नेतुमिच्छन्तं भगदत्तकरेणुं सुप्रतीकमर्जुनः स्वबाणैर्लवशश्छित्त्वा रेणुं चकार अन्त्याक्षररहितं स्वं चिकीर्षुं फल्गुनस्तमाद्याक्षररहितमकृतेति महदाश्चर्यकरमभूत् । सुप्रतीकवधानन्तरमर्जुनः कस्तूरिकातिलकलाञ्छितं भगदत्तशिरोऽपि न्यकृन्तत् । मत्तेन दन्तिना सह भगदत्ते वधं याते पाण्डु-

१- ध्वजिनी सेना ।

नन्दनाः सत्यजिन्नाशशोकार्तिमत्यजन् । तदनु नाम्नारुणे तेजसि सन्ध्ययापि तादृशे कलशयोनिः[1] स्वयं नाम्ना गुरुरपि व्यथयापि तादृग्विधो रथाश्वपदातिभिस्त्रिभि-रेवाङ्गैर्विरलितेन बलेनानुगम्यमानस्तादात्विकं[2] स्वमनो-रथमिव दूष्यतामुपगतं दूष्यं[3] शनैः शनैरावव्रते । युद्धा-दागत्य व्रणितेभ्यो गात्रेभ्यो महता कष्टेन कवचमपनीय कठोरे आसने समुपवेष्टुमशक्यतया कोमलशयनशयितं द्रोणमुपगम्य कृताञ्जलिर्दुर्योधन एवमभाषत–हे आचार्य ! यत् त्वं मम मनोरथं न सफलयसि तेन तव कृपा मयि ह्रस्वा जातेति संभावयामि । यथा तव श्याले कृप इति प्रथिते कृपाशब्दो ह्रस्वो जातस्तथैव मद्विषयेपि तव कृपा ह्रस्वतां गतेव प्रतीयते । भगवन् ! त्वमिदं सावधानेन चेतसा स्मृतिपथमुपनय । भीष्मः शरशय्यायां शयानो मनसा च हरिं ध्यायन् मम भारं भवत्येवारोप्य निर्वृतिं गतस्तत्पूर्तये भवताऽवश्यं यतनीयम् इति । अतिशोकयुक्तं तथा प्रार्थयमानं च दुर्योधनं गुणागारो दयालु द्रोणः प्रत्यभाषत-श्वोऽहं प्रातरेव चक्रव्यूहनामकसेना-संनिवेशविरचनेन रुदत्स्वपि पाण्डवेषु सर्वानपि भवतो-ऽभयान् सर्वतः सेनायां चारयिष्यामि इति । दुर्योधन-

१- द्रोणः । २- तात्कालिकम् । ३- पटमण्डपम् ।

माश्वास्य सदनाय विसृष्टवतो मुहुर्मुहुरर्जुननिष्ठं सव्यसाचित्ववैशिष्ट्यमनुचिन्त्य हृदि रणरणिका[1]मननीयसीं बिभ्राणस्य द्रोणस्य सकाशाद् विनिर्गतां निद्रासखीं[2] विचेतुमिव सा निशापि तरसा निरगात् ।

अपरेद्युः कलशीसूनुरसौ कवची विशिखी रथी शरासी[3] भूत्वा युद्धभूमिमवाप । चक्रव्यूहं च रचयांबभूव । देवानां बहु विस्मयं जनयन्ती तदीया चक्रव्यूहरचना शत्रुभूपतीनां प्राणमृगहरणे जालकार्यमकरोत् । द्रोणकृतां तादृशव्यूहरचनां श्रुत्वा दृष्ट्वा च धर्मपुत्रो युधिष्ठिरोऽभिमन्युं नामार्जुनपुत्रमब्रवीत्—अयि वत्स ! सम्प्रति तव पितार्जुनोऽन्यत्र संशप्तकयुद्धे गतवानस्ति । त्वं च पितेव चक्रव्यूहमूहितुमपोहितुं चालंभूष्णुरसि । अतस्तदनुपस्थितौ सकलपाण्डवसेनापरित्राणं त्वदन्वायत्तम् । झटिति कवचं प्रतिमुञ्च । चापं धत्स्व । धैर्यं भज । परितो योधान् विधेहि । शताङ्गम[4]धिरोह । इमं चक्रव्यूहमाविश । रिपूंश्च निषूदयेति । राज्ञो युधिष्ठिरस्य निदेशं मौलिदेशे निवेश्य योद्धुं प्रतिष्ठमाने बालेपि स्वयमेकाकिनि तस्मिन् भद्रे सौभद्रे लीलया चक्रव्यूहमवगाह्य निजकोदण्डचण्डिमसम्पदा

१- चिन्ताम् । २- निद्राख्यां सखीम् । ३- शरासो धनुः तद् विद्यते यस्य सः । ४- शताङ्गो रथः ।

कौरवचमूं क्षोभयमाणे सति सिन्धुपतिर्जयद्रथो व्यूहमुखं विधाय स्मरहरहर¹ वरलाभदर्पेण तदनुधाविनीं पाण्डव-वाहिनीं क्रुधा रुरुधे। अर्जुनसुतोऽभिमन्युस्तीक्ष्णबाण-प्रहारेण भानुसुतस्य कर्णस्य रथमर्धं भित्त्वाऽर्धरथोऽयं कर्ण इति भीष्मपितामहोक्तिं तथ्यां समर्थयामास। धृत-भूरिमन्योरभिमन्योः शरप्रयोगे अश्वत्थामा यदीर्ष्यास्मि-तमकुरुत मन्ये तत्कान्तिव्याजादभिमन्युरश्वत्थाम्ना बाल्ये निपीतान् दुग्धाभावे तत्प्रतिकृतीन् पिष्टसारान् वमनद्वारा बहिष्कर्तुं तं बाध्यं चक्रे इति। द्रोणाचार्यस्तादृशमभिमन्यु-पराक्रमं पश्यन् दिङ्मूढो भयभीतश्च सन् कम्पमनुभवति स्म। सर्वासां सुमनसां पूर्वमेवाभिमन्योरुपरि वृष्टत्वेन नन्दनवने सर्वथा पुष्पराहित्यमजायत। केवलं पुष्पवर्षका देवा दिव्यदृश्यन्त। वर्षणकर्तारः सुमनसो दृश्यन्ते स्म। वर्षणकर्माणि सुमनसस्तु नन्दने न दृश्यन्ते स्मेत्याश्चर्यमजनि। अथ कर्णोऽभिमन्योः कोदण्डमखण्डयत्। द्रोणो रथाश्वान् व्यनाशयत्। कृपः सारथिममथीत्। अश्वत्थामा च रथध्वज-पटं व्यपाटयत्। एवं सर्वे सम्भूय तमाचक्रमुः। एकेन सह बहून् युध्यमानान् द्रोणादीन् दृष्ट्वा देवा अभिमन्युं पुष्प-

१- स्मरस्य हरः कामदेवविनाशकः यो हरः शिवः तस्य वर-लाभेन यो दर्पः अहङ्कारस्तेन।

वृष्ट्या सभाजयामासुः। द्रोणादींश्च धिक्कारैरभर्त्संयन् बालोऽभिमन्युस्तदा गदापाणिः सन् रथादवप्लुत्यामीषां द्रोणादीनां केवलं रथानेव मन्दाक्षभृतः शिथिलीभूत-चक्रान् न कृतवान् किन्तु तानपि मन्दाक्षभृतो लज्जा-युक्तानतनोत्। तदनन्तरं युद्धाय कृतोद्यमौ दुर्योधनःदुःशासन-सुतौ द्वावपि युगपदेवाभिमन्युर्हतवान्। मन्ये बालाविमौ पृथक् पृथक् कृतान्तापुरस्य भयंकरे मार्गे गन्तुं भयभाजौ स्यातामिति तौ परस्परसहायौ विधाय निर्भयं यमपुर-वर्त्मनि गन्तुमनुदिदेशेति। अथ सुचिरं मथिता व्यथिता रोषक्कथिताश्च कर्णद्रोणजयद्रथदुर्योधनदुःशासनकृपाश्व-त्थामानो महारथाः सरथास्त्राः कैतवमङ्गीकृत्य यौगपद्या-देव मिलितास्तं निरस्त्रमभिमन्युं स्वयशोभिः सह पातयां-बभूवुः। अभिमन्युवधानन्तरं पाण्डवसैन्यैर्यावद्रुदितं तावदेव कौरवसैन्यैरानन्दगर्जितं कृतम्।

तत्रान्तरे संशप्तकानिव त्रिगर्तानपि क्षुरप्रैर्गात्रे[1] सहस्रगर्तान् विरचय्य प्रत्यावृत्तोऽर्जुनः स्वशिविरमायातः। तत्र रुदतः स्वबान्धवान् दृष्ट्वा स्वपुत्रमरणवृत्तान्तं च श्रुत्वा तस्य हृदयं संतापाग्निनादह्यत। युधिष्ठिरसहितः श्रीकृष्णो वीरस्य पुत्रस्य विरहे विलपन्तं रुदन्तं धरणौ लुठन्तं

---

१. क्षुरप्रैः बाणविशेषैः।

चार्जुनं बहुभिरुपदेशवचनैः सान्त्वयामास । अर्जुनमपि भगवान् अशोकं[1] कृतवानिति नातीवाश्चर्यं कर्तव्यम् । तस्य सर्वशक्तिमत्त्वात् । तदनन्तरमर्जुनः कोपाद् बाहुमुदस्य यद्यहं श्वः सूर्यास्तमयात् प्रागेव पुत्रद्रुहो जयद्रथस्य शिरो न च्छिन्द्यां तदा वह्नौ प्रविश्यात्मानं व्यापादयेयम् इति भीषणां प्रतिज्ञामकरोत् । एवंविधां पार्थप्रतिज्ञां समाकर्ण्य भीतमानसाय जयद्रथाय द्रोणः प्रतिज्ञां दत्तवान्—यत् श्वः समरेऽहं त्वां पार्थाद् गुप्तिरूपेणालक्ष्यभावेन स्थापयितुं रक्षितुं च भारमाददे । अन्येद्युरवलम्बितप्रथमशिखरिसानौ भानौ कपिपरिवृढेन हनूमता परिमण्डितं मानसगरुड[2]गन्धवहबान्धवैः सैन्धवैराहितबन्धनं स्यन्दनमधिरुह्य संक्रन्दननन्दनोऽर्जुनः समरोचितवेषसम्पदविकलेन निजबलेन सह प्रतिष्ठमानो निरुद्धवियत्पथै रथैर्मदबन्धुरैः सिन्धुरै[3]र्विविधगतिनाटकैर्घोटकैः कृतरणासक्तिभिः पत्तिभिर्विरचितपरिपन्थिजनमोहस्य व्यूहस्य पृष्ठभागे जयद्रथं प्रतिष्ठाप्य स्वयमपि पुरोभागं परिष्कुर्वाणस्य द्रोणस्य चरणयोर्बाणाभ्यां प्रणीतप्रणिपातस्तेन दीयमानमार्गावकाशश्चण्डमारुत इव घनमण्डलं तमेव व्यूहं

२- अर्जुनः वृक्षविशेषः, पाण्डुपुत्रश्च । एवम् अशोकः वृक्षविशेषः शोकरहितश्च । २- मानसं मनः, गरुडः पक्षिराजः, गन्धवहो वायुः तद्बान्धवैः शैः । सैन्धवैः अश्वैः । ३- सिन्धुरैः गजैः ।

क्षणादेव क्षोभयामास। तस्मिन् युद्धेऽर्जुनेन मुहुराकृष्टं पाण्डीवं ह्रस्वं दीर्घं च बभूव। मन्ये स्ववाचकपाण्डीव-पदनिष्ठेकारसादृश्यं लब्धुमिवैहत। गाण्डीवशब्दे दीर्घ ईकारो ह्रस्व इकारश्च द्वयमपि कोशप्रामाण्यात् सिद्धमेवेति। देवेन्द्रपुत्रोऽर्जुनो वङ्गदेशाधिपं कङ्कुलामिषं, कलिङ्गं धृतविपल्लिङ्गं, भोजमापदां भाजनं, मागधं यमपुरीसोमा-रुधं, चोलं दुःखनिचोलचित्तमिषुभिः कुर्वन् दिवसावसान-काले जयद्रथं पुरतोऽरुणत्। ततोर्जुनविषयानिष्टशङ्कया व्यथमानमानसस्तद्वृत्तज्ञानोत्को युधिष्ठिरः सात्यकिभीमौ शत्रुसैन्यं प्रति प्रहितवान्। तत्रागतौ च तौ व्यूहमुखस्थं द्रोणं विजित्य कुरुसैन्यानि मर्दयितुं प्रवृत्तौ। सिंहनादं च विहितवन्तौ। तथाविधौ तौ विलोक्य कर्णो भूरिश्रवाश्च हठाद् रुरुधतुः। अथ सोमदत्ततनयो भूरिश्रवाः कृष्णस्या-नुजः सात्यकिश्च भग्ने रथे, मृते सारथौ, छिन्ने च चापे धृतपट्टिशास्त्रौ भयङ्करं द्वन्द्वयुद्धमारब्धवन्तौ। भूरिश्रवाः सात्यकिं भूमौ पातयित्वा स्वचरणेन तस्य हृदयमपीडयत्। मन्ये स तद्हृदि स्थितं दर्पमपि वमनवर्त्मना बहिष्कर्तुमै-च्छदिति। तस्मिन् काले दूरस्थितो भगवान् कृष्णोऽर्जुन-रथचालनमपि हित्वा तत्रैव दत्तदृष्टिरासीत्। पश्य तवायं सखा शिष्यश्च सात्यकिर्विपद्यते इति कृष्णेन चोदित-स्यार्जुनस्य मार्गणेन खण्डितकरो भूरिश्रवा एव केवलं

विहस्ततां हस्तशून्यतां न ययौ, प्रत्युत कौरवा अपि विहस्ततां विह्वलतां ययुः। हस्तच्छेदानन्तरं भूरिश्रवाः धिक् त्वाम्। यो ममान्येन युध्यमानस्य हस्तमन्यायेनाच्छिनः इति भगवत्समक्षमर्जुनं भूयो विगर्ह्यैकं पावनं कुशं जलं प्राश्यापरं पावनं कुश दर्भं तत्र युद्धभुवि समास्तीर्य शयालुरासीत्। तदनु हिडिम्बवैरी भीमः कर्णसाहायकेन भयानकसायकनिकायवर्षिणाममर्षिणां दर्पेण गरीयसां दुःशासनयवीयसां विसर[1]मुज्ज्ञासयितुं विदलितरिपुदलमदां निजगदामष्टाभिः काष्ठाभिः सह भ्रमयांचकार। पुरा गान्धारी धृतगर्भा चिरादप्रसवेऽश्मना[2] गर्भं ममाथ। तदानीं गर्भस्था दुःशासनाद्यात्मजास्तदश्ममाथसमये यां वेदनां प्राप्तवन्तः भीमस्य गदा तेभ्यस्तामेवेदानीं वेदनां दत्तवती। तान् मथितवती। अथ भीमः कर्णस्याश्वानवधीत्। रथमभनक्। सारथिममथीत्। चापं बभञ्ज। ध्वजपटं चाध्वंसयत्। कर्णः क्षणेनान्यं यानमारुह्य विलक्षः[3] कौरवसमक्षमेवाशुगैराशु भीमं निर्धूतवान्। तं व्यथितवान् न तु हतवान्। तेनार्जुनभिन्नकुन्तीपुत्राणामभयस्य दत्तपूर्वत्वात्। कर्णेन त्यक्तो भीमो भूरिश्रवश्चरणधूलिलिप्तवक्षसा सात्यकिना सहार्जुनसमीपं गतः।

---

१- समूहम्। २- पाषाणेन ३- विस्मयान्वितः।

ततो निजशरपुञ्जेन कुरुकुञ्जरान्[1] भञ्जयन्तं धनञ्जयं तं सुतवधेन कृतमन्तुं[2] जयद्रथं निहन्तुमादिश्य दनुजपरिपन्थी श्रीकृष्णो दलितदैत्यचक्रेण निजचक्रेण चण्डकर[3]-मण्डलमप्यधात्[4]। क्षणादेव गभस्तिमानस्तमहास्तेति[5] समस्तनिजबलकोलाहलमाकर्ण्य [6]दुःशलाजानिर्मुदा निजवदनमुदनमयत्। यद्यपि सर्वस्य चक्रकुलस्य सूर्यादर्शनं खेदावहं भवति तथापि तस्मिन् काले शौरिचक्रस्य सूर्यादर्शनमभिलषितमेवाजनि। चक्रेणाच्छन्ने सूर्यबिम्बे तमस्तं गतं प्रतीत्य स्वयं वह्नौ प्रविशन्तं तदार्जुनं द्रष्टुं समागतं जयद्रथं पार्थो दृष्टवान्। यावज्जयद्रथः सूर्यस्यास्तमयमवेत्यार्जुनप्रणाशं द्रष्टुमुपयाति तावदेवार्जुनस्तस्य शिरः पाशुपतेनास्त्रेण चिच्छेद। तच्छेदेनं कौरवाणां हर्षोऽप्यनवच्छेदेनाच्छिद्यत। अर्जुनः पाशुपतास्त्रच्छिन्नं जयद्रथस्य शिरः सिन्धुतीरे तपस्यतस्तत्पितुः करेऽपातयत्। यत्र करे स वृद्धः सूर्यायार्घ्यं दातुं जलं निहितवानासीत्। मन्ये सूर्यार्घ्यायापर्याप्तं तदञ्जलिजलं पूरयितुमिवार्जुनस्तदञ्जलौ सिन्धुभर्तुः समुद्रस्य कं पानीयमिव सिन्धुभर्तुः जयद्रथस्य कं शिरो न्यस्तवानिति।

---

१- कुरुश्रेष्ठान्। २- कृतापराधम्। ३- चण्डकरः सूर्यः। ४- पिहितवान्। ५- अस्तमहास्त, अस्तं गतः। ओहाङ् गतौ लुङि प्रथमपुरुषैकवचनम्। ६- दुःशलाजानिः जयद्रथः। ७- चक्रः चक्रवाकः, रथचक्रं च।

यदा वृद्धस्य जयद्रथपितुः करे जयद्रथस्य शिरः पतितं तदा किमिदमापतितमिति जुगुप्समान इवासौ वृद्धस्तच्छिरो भूमावपातयत् । ततश्च यस्तव पुत्रस्य शिरो भूमौ पातयिष्यति तस्यात्मनोऽपि शिरस्तत्क्षणमेव भूमौ पतिष्यति । इत्येवंरूपेण शिववरेण तस्य वृद्धस्यावाङ्मुखं शिरो भूमौ पपात । अथ तस्मिन् वासवसूनौ वासरविरामे शिविरमुपेत्य यथावृत्तं रणकथां विज्ञाप्य हृषितरोमाणं युधिष्ठिरमुपतिष्ठमाने दुर्योधनः क्रोधनतया निजभगिनीजानिहानिनिदानया सर्वामपि शर्वरीं योद्धुकामः सन् गम्भीरयुद्धारम्भभेरीनिध्वानमुज्जृम्भयामास । त समाकर्ण्य समरवैज्ञाविकाः पाण्डवाः स्मरणमात्रकृतसंनिधानं निशि दशगुणितभुजबलावलम्ब हिडिम्बभागिनेयं घटोत्कचं युद्धे संप्रेष्य स्वयमपि सकलानि निजबलानि संनाह्य संयुगाय युगायतबाहवो निश्चक्रमुः । रात्रेः केशपाशोपमे कामवह्निधूमाभे यमरूपबबरामस्य वासस्तुल्येऽतिघोरे तमसि सर्वतो व्याप्तेऽपि कौरवपाण्डवोभयपक्षभटा दिवस इवातिविस्मयावहं युद्धनैपुण्यं प्राकाशयन् । तत्र रात्रौ संग्रामसोमोपरि जृम्भमाणो घटोत्कचस्तमोभिः सुतमां सान्द्रतमां तमीं स्वदंष्ट्राप्रभाभिर्दिवसं वितेने । रणे कटु

क्षणान्नसावभ्रान्तरे संभ्रान्तो भ्राम्यति स्म । युद्धागता राजानस्तस्य भयादितस्ततोऽपसस्रुः । भीमात्मजोपि स स्वयमेव शत्रुसैन्यानां भीमोऽजायत । भीमजन्यस्यापि तस्य भीमत्वेन तत्र दृश्यतया 'आत्मा वै पुत्र नामासि' इति श्रुत्युक्तं जन्यजनकैकात्म्यं प्रमापितम् । भिन्दीपाल-तोमरशूलास्त्रप्रहारैर्वृक्षाणां पर्वतानां भीषणैर्वर्षणै-श्चासौ सर्वमरिबलमपातयत् । अस्यां रात्रौ सेनेयं शिविरं न गतेति मत्वेव स दुर्योधनप्रीतये तत्सेनायास्तत्रैव क्षयं विनाशं निवासं च कृतवान् । ततो यद्येष घटोत्कचः क्षणं युध्येत तदा मम वाहिन्या एवार्धं न नङ्क्ष्यति प्रत्युत मेदिन्या अप्यर्धं नङ्क्ष्यतीति दुर्योधनो मेने । इति नितान्त-चिन्तासन्तानार्दितस्य दुर्योधनस्य प्रार्थनया मिहिरकुमारः कर्णो महेन्द्रदत्तयार्जुनक्षपणाय चिररक्षितया महत्या शक्त्या तं क्षणदाचरं वक्षसि निर्भिद्य क्षणेन क्षितौ निपातयामास । कर्णप्रहृतशक्तिव्यथां सोढुमसमर्थ इव घटोत्कचप्राणवायुस्तद्धृदयान्निरयासीत् । घटोत्कच-नाशात् परतः सा शक्तिः पुनरपीन्द्रस्य समीपं गता । अतः परं जयद्रथस्य मरणेन व्यथितान् कौरवान्, घटोत्कचस्य मरणेन व्यथितान् पाण्डवांश्च समाश्वासयितुमिव[1] कुमुद-

---

१. चन्द्रे ।

बान्धवे [2]कुलिशायुधदिशमेत्य काशनिकाशैरभीशुभि[3]-राकाशं विकाशयमाने सति कोपकुटिलीकृतचापौ द्रुपद-विराटौ द्रोणाचार्यस्य वपुः स्वबाणैर्व्याप्तमकुरुताम् ।

द्रोणशरीरमग्ना द्रुपदविराटाभ्यां प्रयुक्ता नाराचा द्रोणस्य पराक्रमश्रियो रोमाञ्चा इव शोभन्ते स्म । उभावपि सतीर्थ्यौ द्रोणद्रुपदौ यावत् वयोगुरुणाग्निवेश्यनाम्ना दीप्तधाम्ना मुनिना शिक्षितं तावत् सर्वमस्त्रविद्याकौशल-मुन्मीलयामासतुः । ततः सुचिरं द्रोणो निशितशरनिकर-प्रहारं नाटयन् द्रुपदविराटौ यमपुराक्षवाटमाटिटत् । प्रातः समारूढविहायसि भगवति विवस्वति गुरोरायुर्हे-तुम[4]लिकाक्षरं प्रमार्ष्टुमलीकवचनमेकं प्रयुज्यतां भवता इति धर्म[5]जातमनुकूलयन्तः श्रीकृष्णार्जुनादयः प्रथमसंनिकृष्टस्य धृष्टद्युम्नस्य [6]वरूथिनीविमाथिनीं [7]वारणधोरणीं पुरोधाय भृशं खस्य[8] गुणं शङ्खस्य परि-पूरणेन बहुगुणं कुर्वन्तं कौरवसेनापतिं द्रोणमभिजग्मुः । यत्र तां करिघटां पाटयता घटोत्कचजनकेन भीमेन द्रोणसुतस्याश्वत्थाम्नः सनाम्नि हस्तिनि पातिते सति

---

२. कुलिशायुध इन्द्रः, तस्य दिशं प्राचीमित्यर्थः । ३. किरणैः । ४ अलिकं ललाटम् । तत्र लिखितमक्षरम् अलिकाक्षरम् । अलीकं मिथ्या । ५. धर्मजातं युधिष्ठिरम् । ६. सेनाविध्वंसिनीम् । ७. गज-पङ्क्तिम् । ८. आकाशस्य गुणं शब्दम् ।

प्रचुरतरमदः[1] स्ववशानुवर्ती[1] शुभतर[1]मणिदेदीप्यमान-मस्तकोऽश्वत्थामा हत इति धर्मतनयगदितं कर्णारुन्तुद-मभ्यर्णमाकर्ण्य वैवर्ण्यभरितवदनं सुतकदनशोकमोहेन परित्यक्तचापशयं[2] स्थण्डिलेशयं[3] द्रोणमालोक्य हृष्टतरघो-धृष्टद्युम्नो निजपितृबन्धनस्मृतिजनुषा रुषा सत्वरमेत्य हन्तुमुदयुङ्क्त। स खल्वेकेन करेण खड्गमपरेण च द्रोणस्य कचं गृहीत्वा तच्छिरोऽच्छिनत्। तत् तादृशं तातबधं निशम्य कोपातिरेककलुषोऽश्वत्थामाग्नेयमस्त्र-ममुचत्। अश्वत्थाम्ना प्रयुक्तमाग्नेयमस्त्रं शमयितुं पार्थो ब्रह्मास्त्रं प्रयुक्तवान्। तेन तदीयमाग्नेयास्त्रं धिक्कृतमिव मन्दायमानद्युतिकमभूत्। रविरपि तेनैव सह मन्दायमान-तेजाः समजायत। धृतराष्ट्रसुतो दुर्योधनोपि दिनदीप इव दीनकान्तिरशान्तः शकलीकृतबाहुकर्णनासैरवशिष्टैः स्वपक्षभटैः सह स्वावासदेशमगात्।

द्रोणवधानन्तरं परदिने युद्धप्रवाहिणीनां रक्तधाराणां प्रवाहैः सागरसंगतैरिव शोणितरञ्जिततनौ रक्ताभे

---

१. एतद् विशेषणत्रयं द्रोणपुत्रेऽश्वत्थाम्नि तन्नाम्नि गजे चान्वेति। मदो गर्वः, मदजलं च। वशा करिणी। तस्या अनुवर्ती। स्ववशः स्वातन्त्र्यं चानुवर्तते इति च। स्वच्छमणिशोभितमस्तकौ चोभौ।
२. शयो हस्तः। ३. भूशायिनम्।

भानौ प्राच्यां प्रकटीभूते सति दुर्योधनः कर्णं कनककलशा-हृतैर्जलैः सेनापतिपदेऽभिषिक्तवान् । तत्पदेऽभिषिक्तः कर्णो महाध्वनिना विजयवाद्येन दिगन्तपर्वतगुहाशयान् सिंहान् जागरयन् बलेन सह कालपृष्ठं नाम स्वं धनुर्नर्तयन् वेगेन समरभुवमाससाद। यावत् कर्णो रणस्थलीं गाहते तावद् धृष्टद्युम्नोपि तत्तदस्त्रयुतान् सैनिकानादाय युद्धभू-मिमियाय। तयोः सेनयोत्थापितो धूलिभरो व्योमनि प्रसरन्नपगतमलाया अपि देवापगाया[1] अपाप[2]तामतनो-दिति नाश्चर्यम्। अपगतजलतारूपाया एवापापताया विधनात्।

तदोभयोः पक्षयो द्वन्द्वयुद्धं प्रावर्तत। शत्रुसैन्यसागर-दर्शनजनितकोपेन कर्णेन सद्यो नम्यमानाद् धनुषः प्रादुर्भवन्नाकाशस्य गुणः शब्दस्तत्राकाशे न माति स्म। तदनुक्रमेण रणे द्युमणेः सुतः कर्णो बाणगणैर्धृतविपत्ति-पत्तिकदम्बकम्, अतिविषादि निषादिकुलम् यमपुरी-पथिकान् रथिकांश्च व्यधात्। समरशिरसि कर्णस्य पराक्रमावलोकनेन प्रहृष्यत्सु तच्छिरसि पुष्पवर्षणं कृत्वा रिक्ततामुपगतेषु देवेषु केवलं सूर्याचन्द्रमसावेव पुष्पवन्तौ सपुष्पौ पुष्पवत्पदप्रतिपाद्यौ चातिष्ठताम्। परेद्युः

---

१. मन्दाकिन्याः। २. अपगता आपः यस्याः सा अपापा। तस्याः भावः अपापता। पापराहित्यं च।

परिस्फुरितकमल[1]चक्रव्यूहे प्रकाशमानपत्रि[1]कुलसंचारे प्रकटितघन[1]ञ्जयतेजोवर्धने भाविनि प्रधन इव प्रभातसमये प्रादुर्भवति सति मधुमथनसारथेर्मधवत्कुमारस्य वधकृते समीचीनं शल्यकृतं सारथ्यमेव परं साधनमवधारयता राधेयेन कृतबोधनो दुर्योधनः सबहुमानं मानधनभाजं मद्रराजमुपगम्य तं तैस्तैर्मधुरम्नर्नवंचनैः कथमप्यनुनीय कर्णरथनैपथ्यं[2] सारथ्यमधिरोपयामास । सारथ्यं स्वीकृत्य शल्येन योजिताश्वं रथमारोहति महापराक्रमे कर्णे कौरवसेना विजयाशया महान्तमानन्द, पाण्डवसेना च पराजयभयमविन्दत । रथारूढः कर्णो युद्धक्षेत्रमागत्य शङ्खं दध्मौ । तदनु चण्डतरदोर्दण्डश्चण्डकरसूनुरसौ निजयन्तारं[3] मद्रनेतारं प्रति वचनमित्थमुत्थापयामास-अयि शल्य ! तव सारथ्यकौशल्यं निभाल्य विजयसारथेः कृष्णस्य वदनमधिलज्जापयोधि निमज्जति । यथा मेघेनाग्निः प्रशम्यते तथाहमपि त्वत्सारथ्येन बाणवृष्ट्यार्जुनं स्थगयेयम् इति । तत् कर्णकटु कर्णवचनमाकर्ण्य पुरा

---

१. एतत् त्रितयं प्रधनप्रभातयोरुभयोरप्यन्वेति । प्रभातपक्षे कमलान्येव चक्रव्यूहः । पत्री वाणः, पक्षी च । धनञ्जयो वह्निः, पाण्डुपुत्रश्च । २. नेपथ्यो वेषः । कर्णरथालंकरणमित्यर्थः । ३. यन्ता सारथिः ।

युधिष्ठिरप्रार्थितमर्थं हृदि निधाय स मद्रभूपतिरपवार्य सूर्य-तनयधैर्यं गगनकुसुमसोदर्यं विधातुमेवमुत्तरङ्गयामास-हे कर्ण ! विराटगोहरणसमयेऽर्जुनः प्रस्वापनास्त्रं प्रयुज्य यदा भवतां वस्त्राणि स्वसारथ्युत्तरद्वारापजहार तदा भवान् कथं न जागर्ति स्म । सम्प्रति विकत्थमानस्य तव तदा जागरणमुचितमासीत् । पूर्वं दुर्योधनस्य घोषयात्रा-काले द्वैतवनमध्ये तव भुजशालिनः सुहृदि दुर्योधने चित्रसेनगन्धर्वेणायासरहितं रज्जुभिः सन्दानिते सति त्वं क्व निकुञ्जे गूढवसतिरासीः । किं च द्रौपद्या विवाहसमये संघीभवद्भिर्धार्तराष्ट्रैः सह भवान् अर्जुनशरप्रहारा-दात्तगन्धोऽभिभूतः सन्नपीदानीमात्तगन्धः सगर्वः कथमभूः । कर्णस्य शब्दग्रहणौचित्येऽपि गन्धग्रहणस्यानुप-पन्नत्वात् । त्वमिदं साध्ववधेहि, येन शिवेन सह युद्धाय स्वप्राणांस्तृणाय मत्वार्जुनः सन्नद्धो जातः स शिव एवार्जुनसमोऽस्ति । नान्यस्त्वादृक्षः कश्चन तत्तुल्योऽस्तीति । तस्य मद्राध्यक्षस्य तादृक्षमृभुक्षणः[४] कुमारि पक्षपातं समीक्ष्य सूर्यकुमारः कर्णो रौक्ष्यवर्जं सुभगंभावुकं वचनमेवमवादीत्-अयि मद्रराज शल्य ! स्वभगिनीपुत्राणां

४. ऋभुक्षा इन्द्रः ।

पाण्डवानां प्रशंसनपरायणस्त्वं मम मातुलेति बहुधा वदतात्मानं श्लाघमानेनार्जुनेन सह शम्भुमपि मा तुलय। यावदेवमभिधाय कर्णः स्वोष्ठौ सुष्ठु योजयति तावदेवोभयपक्षसैन्यानि विरोधजन्यं द्वन्द्वजन्यमारब्धवन्ति। सेनोत्थापितधूलिभिः सरःसु शुष्कतामापादितेष्वप्सरःकुलं केवलमाकाश एव दृश्यते स्म। नान्यत्राप्सरःकुलं जलपूर्णसरःसमूहेऽदृश्यत। तदनु तत्रातिभीषणे पट्टिशखेटक[1]शक्तिकरिशुण्डादण्डाश्वरथचक्रैः संकुले सकलदेवगणरोमाञ्चोदञ्चके समीके[2] दुर्योधनानुजो दुःशासनो विविधानि चक्राकारभ्रमणानि वितन्वन्तं प्रतिज्ञातस्वोरस्थलभेदनं भीमं वीक्षितुमुन्नतप्रदेशमधिरूढाभ्यां रोषलोहिताभ्यां लोचनाभ्यां[3] साध्वसदानशौण्डः करतलबंभ्रम्यमाणपरिघपातनपातितभटघोटकक र[4]टिघटाक्षतजप्रवाहैः समरसीमानं कण्टद्वयसीं[5] विदधानो वियदध्वनि विजृम्भितध्वनिवृकोदरदृगध्वनीनोऽभूत्। दर्शनसमकालमेव तौ बद्धकच्छौ स्वेच्छया परस्परं घोरं गदागदि[6] रणं कुर्वाते स्म। सुचिरं गदया युद्ध्वा भीमः कुरुभूपतीनां समक्षमक्षमी क्षमायां निपातितस्य दुःशास-

१ खेटकं शस्त्रविशेषः। २ युद्धं। ३ साध्वसं भयम्। ४. करटी गजः। ५. कण्ठप्रमाणाम्। प्रमाणे द्वयसच् प्रत्ययः। ६. गदाभिश्च गदाभिश्चेदं प्रवृत्तं युद्धं गदागदि।

सनस्य गण्डे कराभ्यामुदरे पदाभ्यां साधु संताडनं समाचचार। उर्व्यां पातयित्वा वक्षो विदार्य च तस्य स्फीतं रक्तं पिपीतवान्। तैरेव शोणितैरेणीदृशः स्वप्रियाया द्रौपद्या वेणीं द्विषत्क्षोणीभृतामक्षिभिः सह शोणीचक्रे। इतस्त्वर्जुनोपि कर्णदुर्योधनादीन् अनादृत्य धृतासिधेनुकास्त्रमुग्रं वृषसेनं नाम कर्णपुत्रं स्वबाणैर्यमलोकमनैषीत्। वृषसेनं नाम स्वसुतमभिमन्युवधप्रतिकारमिच्छतार्जुनेन निहतं श्रुत्वा कर्णः कोपारक्तनेत्रो भूत्वा शत्रुसैन्यमृगान् तरक्षु[७]रिव प्रतिक्षिपन् सर्वतः सेना दिधक्षुरिव समीक्ष्यते स्म। कुण्डलीकृतकोदण्डस्तदीयपाणिः पाण्डवानां बलान्तरे ताण्डवं विदधे। मार्गणाः[८] सदानाम्बुकरं[९] स्थूल[१०]लक्ष्यं यान्तीति नियमात् कर्णमुक्ता बाणाः करिसमूहमयच्छन्। कर्णबाणाहता रुधिररक्तपृष्ठाश्च शत्रवो निजकरिभिः सह पलायांचक्रिरे। शल्यसारथिमता रथेन चूषितारिमदवारितयासौ सूर्यसूनुरपि चण्डकरोऽजनि। शल्येव चाल्यमानं कर्णरथं पश्यन् भगवान् कृष्णोपि त्यक्त-

---

७. तरक्षुर्मृगादनः श्वापदः। ८. मार्गणाः शराः, याचकाश्च। भ्रमरा अपि। ९. दानं मदजलं, स्वार्थत्यागश्च। करो हस्तः, शुण्डादण्डश्च। १० स्थूललक्ष्यः दानशौण्डः, गजश्च।

धूतिः स्वेदपूर्णं वपुः स्खलित[11]तोत्रश्चाजायत ।

तदनन्तरममर्त्यचक्रवर्तिपुत्रोऽर्जुनो विकर्तनतनयः कर्णश्चोभौ परस्परं प्रधनं कर्तुमारेभाते । तयोरन्योन्य-युद्धकाले चक्रीकृतौ चापौ समरभूदेवतायास्ताटङ्कवत् प्रतीयेते स्म । चिराय युध्यमानौ तावितरेतरं शरनिकर-प्रहारैः रुषावलीढावप्य[12]रुषावलीढावभूताम् । तदनु भानुनन्दनः सव्यसाचिनिधनाय पाणिना पन्नगास्त्रम-गृह्णात् । पुरा खाण्डववनदाहकाले मुखे पुत्रमादाय गच्छन्ती तक्षकपत्नी पार्थेन हता तदा मुखस्थशिशोरश्वसेनस्य पुच्छच्छेदो जातः । मन्ये ततः कुपितोऽसौ पार्थवधाय कर्णतूणे स्थितः । तमेव शरं कर्णः संदधे । स च मातृहन्तृवधाय जिह्वां चपलयन् आबभासे । आपतत् तन्नागास्त्रं निरीक्ष्यार्जुनवत्सलः श्रीकृष्णो निजचरणभरेणार्जुनाधिष्ठितं रथं धरण्यां निमज्जयामास । तथा करणेन तस्यागच्छतो नागास्त्रस्य लक्ष्यच्युतिर-जायत । ततोऽस्त्राच्चार्जुनः त्रस्तः । भगवान् कृष्णो यदा-र्जुनस्य रक्षार्थं तद्रथं निष्पीडयामास तदाऽऽनेमिमग्नायार्जुन-रथाय शिवस्य रथभूता धरणी रथत्वसाजात्यकृतबन्धु-प्रेम्णा स्वान्तःस्थानमकल्पयत् । स हि कर्णास्त्रभूतो

११. तोत्त्रं कशा । १२. रुषा क्रोधेन । अरुषा मर्मणा, व्रणेन च ।

नागः पृथ्वीनिमग्नरथस्यार्जुनस्य लक्ष्यस्थानविस्रस्ततया केवलं किरीटमेवाहरत्, न प्राणान्। तेन किरीटेन सहैवार्जुन-मरणविषयं शक्रस्य भयमप्यहरद् इति मन्ये। ततः पार्थप्रेरितो बाणः कर्णप्रयुक्तं नागास्त्रं खण्डशश्चकार। अद्यैव कर्णो जेतव्य इति भगवदादेशेनार्जुनः कर्णस्य वपुषि क्षणेनैव बहून् प्रहारान् विदधे। याचकसामान्या-दरकर्तासौ कर्णः प्राणयाचनागताय पार्थमार्गणगण-रूपाय याचकाय स्वप्राणान् दत्वा तदभिलाषं पूरयित्वा स्वं वदान्यत्वं चरितार्थयाम्बभूव। कर्णे कर्णेन्द्रियमात्र-पात्रे मृते सति दुर्योधनो नितरां शोकसागरे विमग्नो-ऽभूत्। मन्ये स पश्चात्करिष्यमाणस्य ह्रदनिमज्जनस्या-भ्यासं कर्तुमिव तथा कृतवान् इति। स्वकीयस्य तनूजस्य वधाज्जले स्नातुमना इव मरीचिमाली चापि मन्दाय-मानद्युतिमालभारी सिन्धौ ममज्ज।

कर्णात् परतः समरेषु निपुणं कल्यं[1] रिपूणां शल्यं शल्यं निभाल्य कल्ये[2] दुर्योधनस्तं सेनापतिपदे समुत्तोल्य साफल्येऽ-वैकल्यमनुभवन् स्वमिन्द्रतुल्यमजय्यं मल्लममन्यत। किंतु सत्वरमेवानुपमभुजप्रतापं मद्राधिपतिं शल्यं युधि युधिष्ठिरोऽजातशत्रुरपि निजशक्त्या निहत्येदप्रथमं परहि-

१. स्वस्थम्। २. प्रातःकाले।

सकृत्वमधारयत् । भुजवीर्यशाली सहदेवोपि कुहना³परं शुभे शकुने शकुनिं प्रियपाश⁴कं यमदापितपाशकं व्यधात् । यथा ग्रीष्मे प्रखरप्रकाशः सूर्यः काकान् दिक्षु विद्रावयन्तं कमप्युलूकं न सहते तथैव युद्धे प्रकटपराक्रमो नकुलसहायः स एव सहदेवः स्वप्रतापेन शकुनिपुत्रमुलूकमप्युल्लुलाव । अथार्जुने गाण्डीवमुत्थाप्य हतशेषान् रिपून् हन्तुं प्रवृत्ते सत्यश्वत्थामकृपादयः सहसा कान्दिशीका बभूवुः । इत्थं सोदरदायादवरूथिनीनां रणक्षितौ परिक्षतिमभिवीक्ष्य, दुर्योधनो महीयसा साध्वसेन मनसि विरचितप्रथमप्रवेशः क्वचन दुर्ज्ञाने स्थाने गूढावस्थितिमेवायुष्टोमेष्टिमिष्टामालोच्य झटिति घटितकवचावगुण्ठनः समन्त⁵पञ्चकसमीपस्थं सागरगम्भीरं कंचन महाह्रदमासाद्य दूरं दूरं निमज्ज्य स्वविद्यया सर्वमप्यम्भः स्तम्भयामास । पुरा वक⁶हन्ता भीमोऽद्य धार्त⁷राष्ट्रवधोद्यतोस्तीति भीतस्य तस्य दुर्योधनस्याधमस्य निःसारकासारमज्जनमयुक्तमपि युक्तमेवाभूत् । युधिष्ठिरेण दुष्टं दुर्योधनमन्वेष्टुमादिष्टो

---

३. कपटतत्परम् । ४. पाशः अक्षः, जालं च । ५. कुरुक्षेत्रनिकटस्थितम् । ६. बकः बकासुरः, जलचरपक्षिविशेषश्च ।
७. धार्तराष्ट्राः धृतराष्ट्रपुत्रा दुर्योधनादयः, हंसविशेषाश्च ।

भीमोऽवश्यं स्वगात्रमात्रशेषोऽसौ क्वचन प्रच्छन्ने भूभागे स्वं निगूहेदित्यूहित्वा तदन्वेषणाय रणाच्चलितः। अथ केनचित् किरातेन कृताञ्जलिना सविनयं निवेदितायां सार्वभौमलक्षणोपेतायां पदपङ्क्तौ लक्ष्यमाणैः कलशैरङ्कितावतारपथाद् भीमवचनानि निशम्य विशालैः क्रोधनिःश्वासैरुपरिकोरकितबुद्बुदकलकलोदयात् तस्माज्जलाशयादुत्तीर्य मानिनामग्रणीर्दुर्योधनो भीमेन सह भयानकं दागदि कलहं सरभसमुपचक्रमे। भीमदुर्योधनयोर्गदायुद्धकाले बली बलरामोपि सरस्वतीनामकनदीतीराद् युद्धक्षेत्रे समाजगाम। तयोर्युद्धे हृष्टैः प्रसन्ना देवाः सुरभीणि पुष्पाणि ववृषुर्बलरामस्य चानन्दाश्रु प्रवृत्तम्। समराङ्गणे कुलालचक्रवद्भ्रमतोस्तयोर्भेदं ज्ञातुं बलरामकृष्णपाण्डवसुरगन्धर्वचारणेषु कोपि न प्राभवत्। चिरकालं यावद् गदायुद्धानन्तरमेतद् दुर्योधनस्य जङ्घाद्वयं सदा मन्नामधारि मृदुलं वसनं विमथ्नातीति बहुरुषेव भगवतो नेत्रेण[1] सूचित[2] सूचितं दुर्योधनस्य सक्थियुग्मं तिग्मवेगो भीमस्तूर्णं चूर्णीचकार। तारकासुरमिव तं दुर्योधनं हत्वा कार्तिकेय इव कृष्णसहितो युधिष्ठिरादिगणः षड्भिर्मुखैः कृतशङ्खध्वनिर्दिगन्ते

---

१. नेत्रेण सूक्ष्मवसनेन, नयनेन च। स्याज्जटांशुकयोर्नेत्रम्। २. सुष्ठु उचितम्।

शिविरं जगाहे। भयद्रुतो द्रुतमश्वत्थामा तु युद्धे दुर्योधनं सुचिरमन्विष्य जीवन्तं तमासाद्य च तत्कालोचितवचनैः समाश्वासितवान्। स्वं कर्तव्यं रात्रौ पाण्डववधमपि ज्ञापितवान्। ततश्च तेनानुमतो मध्येमार्गं प्रयान् धृष्टद्युम्नसहितान् शिविरे पश्चापि स्वपतः पाण्डवपुत्रान् निहतवान्। निशीथे भयानकनिजसायकशतधाशकलीकृतद्विषदनेकानीकात् पाण्डवशिविरात् स्वभुजाभ्यामिव प्रविष्टकट[3]काभ्यां कृपकृतवर्मभ्यां सह पुनरपि सरस्तीरमागत्य दुष्करं स्ववृत्तान्तं दुर्योधनाय निवेदितवान्। तदानीमेव हे प्रियसख! सम्प्रति मम प्रीतिरेतावतीत्यभिनेतुमिव तिर्यक् प्रसारितेन भुजयुगलेन यत्नादाश्लिष्य त्वमेव खलु मम प्राणाः इत्यौपचारिकं मिथ्यावचनं प्रयुञ्जानं दुर्योधनं कोपादिव तदीयाः प्राणास्तत्समक्षमत्याक्षुः। दुर्योधनमरणानन्तरं कृपो हस्तिनापुरं ययौ। कृतवर्मा द्वारकाम्। अश्वत्थामा च तपस्यार्थं व्यासतपोवनम्। ततो जाते सूर्योदये धृष्टद्युम्नसारथिमुखाच्छ्रवणकालकूटमपत्या[4]त्ययमधिगत्य विषीदन्त्या द्रौपद्या मूर्छान्धकारं रत्नदीपालोकेन दूरमुत्सारयितुमुत्सुक इव भीमोऽश्वत्थामाहरणाय शताङ्गमधिरुह्य मौर्वीं विस्फा-

३. कटकं वलयम्, सैन्यं च। ४. अपत्यविनाशम्।

रथद्भिरर्जुनादिभिर्मांसलितपार्श्वभागस्तपस्यतस्तस्याश्व-त्थाम्नस्तपोवनं प्रतस्थे । तत्रोपेत्य सर्वेषु सहैव बाणं वर्षत्स्वपि स्वयमसहायोऽश्वत्थामा तपस्वी निर्भयचित्त एवास्त । इषीकामेकामादाय 'निष्पाण्डवा धरणिरस्तु' इति चाभिमन्त्र्य स तां स्वतपसा सहामुञ्चत् । यथा इषीकापदं तूलपदयोगे इष्टकेषीकामालानां चित-तूलभारिषु (अष्टाध्यायी ६, ३, ६५) इत्यनुशासनबलाद् ह्रस्वत्वं याति तथैव पार्थप्रेरितब्रह्मास्त्रप्रयोगेणाश्वत्थाम-प्रयुक्तमिषीकास्त्रं शान्तिरूपां ह्रस्वतामितोऽभूत् । अश्वत्थामानं पराजित्य तच्छिरो भित्त्वा समानीतं तन्मस्तकमणिं दृष्ट्वा द्रौपद्या दाहस्तथा प्रतिबद्धोऽभूद् यथा सत्यपि वह्नीन्धनसंयोगे चन्द्रकान्तमणिसमवधाने दाहः प्रतिबध्यते । ततः संवर्त[1]समयसदृशे तादृशि कुरूणामुभयेषामपि सम्प्रहारे कृष्णा[2]वेणीबन्धायुषा सह परिसमाप्ते सति जनुषा दृशान्धो जरठो धृतराष्ट्रः स्वमपत्यगणं दुःशलानामकविधवाकन्यामात्रशेषं पाण्डोश्च विशेषं शेष[3] सकलमप्यविकलमवगत्य पत्यन्तराभावा-न्मत्या हीनश्चेतनयाप्यन्धो जज्ञे । वस्तुतोऽस्मिन् प्रशस्ते समस्ते व्यस्ते महाभारतीयेऽद्वितीये प्रधने कुरुकुलनिधनस्य

---

१. संवर्तः प्रलयः । २. कृष्णा द्रौपदी । ३. शेषमपत्यम् ।

प्रधानो हेतुरेष मूढधीनृं पदुदुं रूढो व्यूढोद्दण्डसुतदंष्ट्रो धृत-राष्ट्र एवासीद् यः सर्वसंशयच्छिदुरेण विदुरेण भृशमनुशिष्टोप्यशिष्ट इवोच्छिष्टं तदुपदिष्टं मत्वा तत्र नाम्नातीं नाम्ना धृतराष्ट्रोऽपि स्वराष्ट्रमह्नाय समर-वह्नेर्भ्रंष्टं भ्राष्ट्रमजनयत् । दन्द्रम्यमाणादुर्दममदं दर्दुराशं पादोदरमिव दुराशयं दुर्योधनं योधनमातिष्ठमानं यो धनं चेहमानं निजतनयमपि विनयं नाग्राहयद् इति महदिदमुपहासास्पदं विडम्बनम् । तस्य किराज्ञोऽनभिज्ञ-ताया: किमतः परं प्रमाणं स्यात् । आस्तां तावत् ।

तदानीं विदुरसंजयाभ्यां व्यजनादिभिरुपचारै-र्विश्राणितसंज्ञः स धृतराष्ट्रो हा दुर्योधन ! हा दुःशासन ! इति बहुधा विलपन्नुत्थायोल्लोलकल्लोलितशोकसिन्धु-भिर्बन्धुभिः सह नगरान्निर्गतो हे प्राणाः ! भवत्समेषु मृतेष्वपि यूयमद्यापि न निर्गता इति रोषेण प्राणान् बहिरुत्सारयितुमिव हृदि पुनः पुनर्विरचितकरास्फाल-नाभिर्वाष्पप्रवाहं नयनैरुत्सृजन्तीभिर्दुर्योधनादयः क्व पतिता इति गवेषयितुमिव भुवि दूरविकीर्णैश्चिकुरहस्तै-रुपलक्षिताभि, र्विलापैर्दिगन्तरं निरन्तरयन्तीभिः स्नुषाभिः

४. न आम्नाती । अनभ्यस्त इत्यर्थः । ५. सर्पम् इव । ६. प्रशस्तैः केशैः । हस्तरूपैः केशैर्वा ।

परिवार्यमाणया गान्धार्या शनैः शनैरनुगम्यमानः संग्रामभुवमवगाह्य प्रवीरेषु तनयेषु निपत्य परितो विलुण्ठन् सुचिरमरोदीत्। युधिष्ठिरो युद्धक्षेत्रागतस्य कुपितस्य धृतराष्ट्रस्य पुरो गन्तुं भीतः सन् तत्कोपशोकशमनाय कृष्णव्यासौ प्रार्थितवान्। तौ च तत्प्रार्थनामनुरुध्य धृतराष्ट्रं सान्त्वयितुमचिरेणागतवन्तौ। यथा श्रावणभाद्रपदमासौ दावाग्निना दह्यमानं वनतरुं शान्तसन्तापं तनुतस्तथा पुत्रशोकेन सन्तप्यमानं धृतराष्ट्रं कृष्णव्यासौ शान्तमतनुताम्।

अथ सहजैः सह महाहवभुवमासाद्य युधिष्ठिरः स्वामिन्! अनेकविधापराधकरणेन तव शापपात्रं जनोऽयमागतः इति सविनयमुक्त्वा धृतराष्ट्रस्य चरणयोः प्रणिपपात। धृतराष्ट्रस्तं विनयिनं धर्मसूनुं मृदुलमालिलिङ्ग। पश्चात् तदिङ्गितेन मुकुन्देन भगवता भीमसेनस्य लोहनिर्मिता मूर्तिर्धृतराष्ट्रस्य पुरः स्थापिता। धृतराष्ट्रस्तु तां वास्तवं भीमं परिज्ञाय निजवैरेण सह चूर्णीकृतवान्। ततो धृतराष्ट्रं पुरस्कृत्य स्मृतबहुलकरणीयजातो धर्मजा[1]तो दिवंगताय सर्वस्मै

१. युधिष्ठिरः।

ज्ञातिजनाय निर्मलैर्निलिम्प[२]निम्नगासलिलैर्निवापाञ्जलिनिर्वापणं विधिवन्निर्वर्तयामास। निर्वर्तितनिवापकृत्यः स तोरणालंङ्कृतां मङ्गलवाद्योपेतां हस्तिनापुरनगरीं भगवता कृष्णेन भ्रातृभिश्च सहितः प्रविवेश। पुरं प्रविष्टोऽसौ पूर्वं दुःशासनाकृष्टैर्वस्त्रैः संजातवितानं धृतराष्ट्रभवनं दिनमेकमध्युष्य परेऽहनि स्वीयं भवनं प्राविक्षत्। ततः शुभगुणे मुहूर्ते कृतिनः कृष्णादयो धर्मसूनोर्मूर्धनि हैमं मुकुटं प्रकटं न्यधुः। तदानीमेव पराशरसुतविदुरसंजयैः सह संभाषमाणं रथारमण[३]मग्रतो विधाय सप्रश्रयं युयुत्सुना[४] दीयमानहस्ताश्रयो युधिष्ठिरो महान्तं कंचिद् राजवाहनयोग्यं मदगजमधिरूढो धवलातपत्रेण परिष्क्रियमाणोपरिभागश्चामराभ्यामुपवीज्यमानो हर्म्यशिखरावलम्बिनीनां पुरनितम्बिनीनां लाजाञ्जलिभिरवकीर्यमाणस्तां नगरीं प्रदक्षिणीकृत्य द्वारभुवमवतीर्णः कुलसीमन्तिनीभिर्विरचितारार्तिक[५]मङ्गलो निविडवितानमाल्यधूपपरिमलसुरभिते मण्डपे कुरुकुलक्रमागतं सर्वतोभद्रं नाम सिंहासनमध्यमध्यरुक्षत्। कदाचित्

२. देवगङ्गाजलैः। ३. कृष्णम्। ४. तन्नामकपुरुषेण।
५. आरार्तिकम् 'आरती' इति भाषा।

स सुहृद्भिः समं सौधमधिरुह्य चिरविरहितस्य तस्य हस्तिनापुरस्य पुरस्य वापीषु वीथीषु वनीषु चतुष्पथेषु नृत्यालयेषु च दृष्टिं निमज्जयति स्म। सानुजो मात्रा चोपेतः स सुतशतविरहव्याकुलं धृतराष्ट्रमग्रतः कृत्वा धिया जितमिव कुशमास्तीर्योपविष्टः सन् राजर्षेर्भीष्मात् समस्तं वर्णाश्रमधर्मरहस्यं श्रुतवान् प्राज्यमाज्यमिव राज्य बुभुजे।

असौ वीरैर्भ्रातृभिर्जितसकलजनपदः कृष्णभक्तः क्रतुमश्वमेधमसाधारणभावेनेन्द्रायापि दत्तहस्तो व्यधत्त। किमधिकेन रुचितेनोचितेन मधुरसाञ्चितेन सञ्चितेन वचसा। विदितशास्त्रमर्मा, श्रुतधर्मा, भूषितभूषित[४]-मुनिजनगणो, नीतिचणो, विचक्षणः क्षणे क्षणे दानपरायणो, नारायणोन्मुखः सुखस्य भोक्ता, सुवचः प्रयोक्ता, नित्यं सत्ये स्पृहयालु, दयालु भुवनपतिः सुमतिरसौ चिरसौराज्यमुकुटधरो, धरोन्नतिकरो, नरोपकृतिपरो, रुचिरं विहरन् सकलाः कलाः कलयन्, सुप्रजाः प्रजाः प्रजनयन् रसमयं समयं गमयन् नमयन्नरिदल, ममलं धवलं यशः कन्दलयन् असन्दमाचन्दमनुभवन्नवनीतसहृङ् अवनीतलमावीत्।

---

४. भुवि उषिताः भूषिताः। भूषिताः अलंकृताः भूषिता भूनिवासिनो-मुनिजनगणा येन सः।

## उपसंहारश्लोकौ

[शार्दूलविक्रीडितं वृत्तम्]

नैष्ठुर्याज्जनुषान्धभूपतनयो दुर्योधनः क्रोधनः
कुर्वन् यत्र युधिष्ठिरेण कलहं बन्धून् मुधाजीघतत् ।
नष्टो भ्रष्टमतिः स्वयं च, तदिदं व्यासप्रणीतं मया
संक्षिप्तं विहितं हिताय सुधियां स्फीतं महाभारतम् ॥१॥

[मालिनीवृत्तम्]

जयतु जयतु कृष्णो नीतिमानप्यनीति-
र्जयतु जयतु जिष्णुः शीलवान् धर्मसूनुः ।
जयतु जयतु युग्मं प्रीतियुक्तं सभीमं
जयतु जयतु पुण्यं भारतं भारतं नः ॥२॥

इति श्री विद्यानिधिशास्त्रिणा-व्याकरणाचार्येण विरचितं
संक्षिप्तं महाभारतं पूर्तिमगात् ।

———